SARASVATĪ BHAVANA GRANTHAMĀLĀ
VOL. 92

General Editor
Kshetresachandra Chattopadhyaya
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi




# SŪKTI-MUKTĀVALĪ

*by*

GOKULANĀTHA UPĀDHYĀYA

VARANASI
1963

सरस्वती भवन-ग्रन्थमाला

(९२)

# सूक्तिमुक्तावली

गोकुलनाथोपाध्यायविरचिता

सम्पादकः

श्रीभूपनारायणझा



वाराणस्याम्



१८८५ तमे शकाब्दे

॥ श्रीः ॥

## ॥ विज्ञप्तिः ॥

गोकुले गोपरूपेण भक्तहृदयकर्षकम् ।
कृष्णं वन्दे कुरुक्षेत्रे गीतासूक्तिप्रवर्तकम् ॥
सर्वतन्त्रस्वतन्त्रस्य गोकुलनाथशर्मणः ।
कृतीनां द्वे पुरास्माभिः प्राकाश्यमुपपादिते ॥*
गैर्वाणे वाङ्मये गद्य-काव्यान्यल्पानि संख्यया ।
इति दृष्ट्वा गोकुलस्य सूक्तिमुक्तावलीं वयम् ॥
सप्ताख्यानसमायुक्तां साधुगद्यसुगुम्फिताम् ।
आदित्यनाथज्ञादिष्टाः प्रकाशयितुमुद्यताः ॥
एकैव मातृका लब्धा श्र्यनन्तकृष्णशास्त्रिणः ।
फडकेकुलसम्भूतात् पुराणाध्यापकोत्तमात् ॥
तद्वशाच्छोधने यत्नः कृतः सम्पादकेन नः ।
नानाशास्त्रविदा श्रीमद्-भूपनारायणेन वै ॥
समाप्ते मुद्रणे चास्या लब्धाऽपूर्णा च मातृका ।
तस्मिन् भागे यथाशक्ति पाठसंशोधनं कृतम् ॥
सूक्तिमुक्तावली चैषा
रुचिरा गुणगुम्फिता ।
राजतां विदुषां कण्ठे
इति क्षेत्रेशयाचना ॥

---

*पदवाक्यरत्नाकरः—सरस्वतीभवन-ग्रन्थमालाया अष्टाशीतितमं (८८) पुष्पम् ।
काव्यप्रकाशविवरणम्—तस्या एव एकोननवतितमं (८९) पुष्पम् ।

# भूमिका

कस्को न विद्याव्यसनवानद्यापि विद्याद् विद्यावदुत्तमाङ्गरत्नं परमचिरत्नं मिथिला-जनपदलब्धजन्मानं जगति जेगीयमानवाङ्मयमहिमानं महाकवितार्किकं महामहोपाध्यायं श्रीमद्गोकुलनाथमुपाध्यायम् । येनान्वीक्षिकी–पक्षता–परामर्श–सरस्वती–श्रुति–ब्रह्म-त्रिद्यापवर्गान् नाटचपात्राण्युपकल्प्य "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्तव्यः" इति श्रौतक्रमानुसारिणा श्रवण-मनन-निदिध्यासन-साक्षात्कारापवर्गप्रतिष्ठासंज्ञकेन अङ्क-पञ्चकेन निवद्धममृतोदयनामकमाध्यात्मिकं नाटकमवेक्ष्यमाणमपवर्गमार्गमुन्मार्गमिवानारुरुक्षूणामपि चेतसि मङ्क्षु तदारुरुक्षामुपक्षिपति, यत्प्रणीतः पदवाक्यरत्नाकरो नालङ्करोति शाब्दरत्नश्रिया कस्य तदवगाहकस्य हृदयम्, यद्विरचितं न्यायनिगूढतत्त्वोपचितं न्याय-सिद्धान्ततत्त्वं कस्य नाधत्ते महत्त्वं नैयायिकेषु, यद्विद्योतितो दीधितिविद्योतः कस्य नान्त-स्तत्त्वचिन्तामणेश्चाकचिक्यमुपचिनोति, यदीया काव्यप्रकाशविवृतिर्नाम कृतिर्न कस्य साहित्यिकस्य कृतिनश्चेतश्चमत्करोतितराम् ।

अदसीयासु परश्शतासु कृतिषूपलभ्यमाना अधस्तन्यस्त्रयोविंशतिः कृतयः कृतिनां पुरः परिस्फुरन्ति—

(१) रश्मिचक्रम्, (२) दीधितिविद्योतः, (३) न्यायसिद्धान्ततत्त्वम्, (४) मिथ्यात्व-निरुक्तिः, (५) पदवाक्यरत्नाकरः, (६) दिक्कालनिरूपणम्, (७) कुसुमाञ्जलिटिप्पणम्, (८) रसमहार्णवः, (९) काव्यप्रकाशविवृतिः, (१०) लाघवगौरवरहस्यम्, (११) शक्ति-वादः, (१२) कुण्डकादम्बरी, (१३) कादम्बरी, (१४) कादम्बरीप्रश्नोत्तराणि, (१५) कादम्बरीकीर्त्तिश्लोकाः, (१६) एकावली, (१७) वृत्ततरङ्गिणी, (१८) शुद्धिविवेकः, (१९) अशौचनिर्णयः, (२०) शिवशतकम्, (२१) मासमीमांसा, (२२) अमृतोदयनाटकम्, (२३) गोकुलनाथसूक्तिमुक्तावली ।

तासामन्यतमा चमत्क्रियातिरेकेण धन्यतमा च कृतिरियं गोकुलनाथसूक्तिमुक्तावली नाम ।

गढ़वालनृपतेः श्रीमत्साहफतेपते राजधानी श्रीनगरमासीदिति "श्रीनगरे वासव इव जयति नृपः श्रीफतेपतिः साहः" इत्यनेन तदीयेन पद्येन, तदुभयवर्णनात्मकेन प्रकृतकाव्य-घटकेन गद्येन च प्रतिपद्यते । तत्र नृपतिममुमुपजीवन्नसौ महाकविरदसीयौ युवराजनरेन्द्र-सिंह-कुमारगोपालसिंहौ विविधविद्यामध्याप्य कदाचन राजसभोपविष्टाभ्यां ताभ्यां भ्रूभङ्ग-सूचितया पितुरभ्यनुज्ञया काञ्चन सरसकथामाख्यातुमभ्यर्थितो गुड़जिह्विकान्यायेन तयोर्मनो-विनोदनमुखेन धार्मिकभावमुद्भावयितुकामः सप्तभिराख्यानकैः सूक्तिमुक्तावलीं जग्रन्थेति कथोपोद्घातभूतप्रथमाख्यानकावसाने स्वयमाख्यत । एवं चामुष्य महाकवेः सत्यपि पेशले पद्यकाव्यकौशले काव्यस्यास्यांशिककथात्मकतया "कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्" इति दर्पणकृदुक्तदिशा गद्यात्मकत्वमेवोपपद्यते ।

गद्यपद्यभेदाभ्यामुभयविधेषु श्रव्यकाव्येषु गद्यकाव्यमेव कविस्वाच्छन्द्यनिबन्धनामनवद्यता-महंति। पद्यकाव्ये हि साङ्गीतिकसुखावहत्वेऽपि वृत्तबन्धावकुण्ठिता कविप्रतिभा वराकी प्रतिभातमपि रमणीयार्थं शब्दसार्थं नियतमात्राक्षरानुरोधेन यथायथं निवेशयितुमक्षमा रसानुगुणगुणरीत्यलङ्कारैः काव्यकामनीयकाय न प्रकल्पते।

गद्यकाव्ये तु प्रकृतप्रतिबन्धगन्धशून्यतयाऽनल्पकल्पनोत्तुङ्गरङ्गभूमौ भृशमुन्मिषन्ती सा तरङ्गितभव्यभावभङ्गिभिः काव्यकलेवरमुत्कर्षन्ती चमत्कारसारैः रसासारैः सहृदयहृदय-माकर्षन्ती कौतुकातिरेकमावहति ।

तस्मात् कविप्रतिभाप्रतिभासकतया गद्यकाव्यमेव दीप्रदर्पणतां दधातीति निश्चप्रचम्। इत्थमभिसन्धायैव 'गद्यं कवीनां निकषं वदन्ति" इति कविरत्नपरीक्षणोपकरणतया गद्य-काव्यस्य निकषरूपतां प्रवदन्ति परीक्षितारः।

लोकान्तरावलोकनकुतूहलस्तव्यं नन्दनवनवास्तव्यं कमपि भ्रमरयुवानममर्त्यलोकादन्त-रिक्षलोकातिक्रमणक्रमेण मर्त्यलोकमवतीर्य तत्र प्रवासावधिवेलामवधीर्य च वनमदश्चिरेण प्रत्यागतं प्रति तत्रत्यपारिजाततरुशाखोपकल्पितनिशान्तायाश्चिरविरहक्लान्तायास्तत्कान्ताया अवधिदिवसातिक्रमणकारणप्रश्नमुपक्रम्य श्रीमद्गोकुलनाथसूक्तिसुधारसास्वादव्यासङ्गस्यैव तत्कारणत्वमुपसमहारि काव्येऽस्मिन् महाकविना।

एवं चोपक्रमोपसंहाराभ्यामसौ भ्रमरयुवैवात्र मुख्योऽनुकूलनायकः, चिरप्रवासेन तद्विप्र-लब्धा भ्रमरभामिन्येव स्वकीया प्रगल्भा च मुख्यनायिकेति तदुभयालम्बनको विप्रलम्भ-शृङ्गार एवात्राङ्गिभूतो रसः। कथापथाधिरूढः सुरथोऽनुकूलो धीरोदात्तश्चावान्तरनायकः, विश्वकर्मणः शापवशेन तद्विप्रलब्धा चित्राङ्गदा स्वकीया प्रगल्भा चावान्तरनायिकेति तदालम्बनकः करुणविप्रलम्भ एवाङ्गभूतो रसः। "न विना विप्रलम्भेन सम्भोगः पुष्टि-मश्नुते" इनि न्यायेन अङ्गाङ्गिनोरुभयोरपि विप्रलम्भयोः पोष्यपोषकभावेन काव्यान्ते सम्भोगशृङ्गारपर्यवसायितया सम्भोगोपसंहारित्वमस्य काव्यस्य सम्पद्यते। माधुर्यमेवात्र धुर्यगुणः, पाञ्चालीपुरस्कृता गौडी च प्राप्तप्रौढी रीतिः, प्रतिपदमेधितचमत्कारा आसादिता-नुप्रासयमकश्लेषपुरस्कारा उत्प्रेक्षोपमाव्यतिरेकादयश्चालङ्कारा विलसन्ति।

गद्यं तु गदितं द्वेधा कथा चाख्यायिकेति च।
कथा कल्पितवृत्तान्ता सत्यार्थाऽऽख्यायिका मता॥

इति काव्यादर्शदर्शितदिशा केवलभ्रमरोपाख्यानांशे कथात्वसम्भवेऽपि चित्राङ्गदाद्यु-पाख्यानानां पौराणिकतया भूयसा व्यपदेशन्यायेनाऽऽख्यायिकात्वमेवास्य काव्यस्य सिध्यति। अत एव प्रकृतकाव्यान्ते "सप्तममाख्यानकमाख्यायिका च समाप्ता" इति ग्रन्थकृतोदलेखि। प्रत्याख्यानकावसाने "श्रीगोकुलनाथसूक्तौ कथायाम्" इत्युक्तिस्तु तयोः पारिभाषिकभेदमवि-भाव्यैवेति विभावनीयम्। "ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम्" इति दण्डिदेशनया समासभूयस्त्वस्य गद्यकाव्यप्राणतया तल्लक्षणमुत्कलिकाप्रायत्वं चास्य काव्यस्योक्तन्यायेनाव-कल्पते।

महाकविबाणभट्टप्रणीतस्य कादम्बरीकाव्यस्य वृत्तरार्धशेषेऽपि करुणविप्रलम्भस्यैवोप-लम्भेन न सम्भोगशृङ्गारोपसंहारित्वम्। प्रायशस्तत्रत्यवृत्तान्तानां कल्पितत्वेन नाख्यायि-

कात्वम्, अपि तु कथात्वमेव, प्रायः समासलाघवस्यैवोपलम्भेन नोत्कलिकाप्रायत्वम्, अपि तूक्तन्यायेन चूर्णकत्वमेवापततीति रसगुणालङ्कारांशे तत्साम्यसम्भवेऽपि तत्तदंशे तदतिशायित्वमेवास्य काव्यस्य विमर्शपथमधिरोहति ।

वाराणसेयसंस्कृतविश्वविद्यालयस्य पुराणेतिहासविभागाध्यक्षाः श्रीमन्तोऽनन्तशास्त्रिफडकेमहानुभावाः कुतश्चिदुपलभ्य स्वपार्श्वे चिराद्रक्षितं वाराणसीमण्डलान्तर्वर्तिसथवाग्रामवास्तव्येन श्रीवटुकप्रसादकायस्थेन १९८२ वैक्रमसंवत्सरे कथञ्चिल्लिखितमिमं ग्रन्थं जीर्णग्रन्थोद्धरणबद्धपरिकरेभ्यो वाराणसेयसंस्कृतविश्वविद्यालयोपकुलपतिपदमधितिष्ठद्भ्यः श्रीमद्भ्य आदित्यनाथझामहोदयेभ्यः केनापि सम्पाद्य प्रकाशमापाद्य च सरस्वतीभवनग्रन्थरत्नमालायामेकतमरत्नविधया निवेशयितुमुपायनीचक्रुः । श्रीमन्त उपकुलपतिमहोदया अपि तमाकलय्य कौतुकातिशयेनामूलचूलमवलोक्य चाकृष्टहृदया न जाने किमालोच्य मय्येव तत्सम्पादनभारमारोपयाञ्चक्रुः । तदादेशवशेनोररीकृतदुर्भरभारोऽहं तद्ग्रन्थे कियद्भिरक्षरैः पूरणीयानि कियन्ति रिक्तस्थानानि, विरामवैकल्येन यथायथमन्वयमननुभावयन्ति कियन्ति पदवाक्यानि, प्रतिलिपिकरपरम्परोपनतप्रमादेन कतिचन्न स्वरूपतो विपर्यस्तानि, कतिचिदविन्यस्तानि चाक्षराणि निरीक्ष्य तत्क्षणोद्विजमानमानसोऽपि शनैश्शनैरुपबृंहिताभ्यामूहापोहाभ्यां रिक्तस्थानानि सम्पूर्य, पूर्णविरामार्धविरामचिह्नाभ्यां पदवाक्यानि विघट्य, केनचिच्चिह्नेन च यथायथं सङ्घट्य, सूक्ष्मेक्षिकया चाक्षराणि सङ्गमय्य, मध्येपदं कृतास्पदं कियन्तमनुस्वारं परसवर्णेनान्तरतमवर्णेन विपरिणमय्य च सर्वा अपि तत्तत्त्रुटीः पर्यमार्जयम् ।

इत्थमायस्य मया सम्पादितेयं श्रीगोकुलनाथसूक्तिमुक्तावली श्रीमदादित्यनाथकरव्यतिकरचाकचिक्योदञ्चिता कोविदानां कौतुकातिरेकाय कल्पेतेति कृत्वा तद्वरिवस्यायामादरोद्रेकेण न्यस्यते, विश्वस्यते च मामकोहापोहवैगुण्येन सम्भाविताबशेषामशुद्धिमुद्बुद्धबुद्धिसुधोत्सेकेन स्वयमेव सुधियः शोधयिष्यन्तीति ।

मिथिलाललामभूते 'मङ्गलवनी' (मंगरौनी) नामकग्रामे सप्तदश्यां शताब्द्यामसौ महाकविरुदभूदिति तन्निबद्धमासमीमांसया, विद्यानिधिर्वाणीविलासकविः श्रीपीताम्बरः पिता, उमादेवी च तस्य मातासीदिति—"विद्यानिधिक्षीरधिपारिजातमुमासुतं गोकुलनाथधीरम् । एकावलीसङ्घटनानिवेशे न्ययुङ्क्त फत्तेपतिसाहभूपः ।।" इति तदीयपद्येन सिध्यति ।

"वात्स्यायनवत्सानामेकतमस्य प्रातिभोऽयं पन्थाः । ते हि माध्यन्दिनमूर्धन्याः",

"सुभाषितेर्ष्याकलुषस्वलोचनविषानलैः ।
फणं दहन्ति शेषस्य तस्मात् फणदहा मता ।।"

इत्थाभ्याममृतोदये भगवत्याः श्रीसरस्वत्या वाक्यविधयोपन्यस्ताभ्यां गद्यपद्याभ्यां वत्सगोत्रापत्यभूतस्य तस्य महाकवेः फणदहपदापभ्रंशविधया मैथिलपञ्जीप्रसिद्ध 'फन्नावार'-संज्ञकसिद्धवंशस्तम्बकरीरत्वमपि प्रमापथमवतरति ।

यो जन्मतश्च गुणतश्च मतः कनिष्ठः श्रीमत्त्रिलोचनकवेश्च धनञ्जयाच्च ।
स श्रीजगद्धरधरातिलकाग्रजन्मा निर्मास्यति प्रगुणतत्त्वरसं प्रबन्धम् ।।

इत्यनेनामृतोदये भगवतीं श्रुतिं प्रति श्रीसरस्वतीवाग्विधया निबद्धेन तदीयपद्येन चतुर्षु सोदरेषु श्रीगोकुलनाथस्तृतीय आसीदिति प्रमीयते ।

यो भवेदतिमेधावी चतुर्णामेकमश्नुते ।
अल्पायुरनपत्यत्वं दारिद्र्यं व्याधिमेव वा ।।

इति न्यायेनाप्रसूतपुमपत्यस्य तस्य 'कादम्बरी'नामिका कन्यकैवापत्यमेकमासीत् । सापि शैशव एव सुरस्रोतस्विन्यां निमज्ज्य सुरपुरमयासीदिति तन्नाम्ना प्रणीतेषु कतिषुचिद् ग्रन्थेषु साम्प्रतमुपलभ्यमानमुपरिष्टान्निर्दिष्टं कुण्डकादम्बरीप्रभृतिग्रन्थचतुष्टयं तदतिवेल-वात्सल्यमुपोद्बलयति । इति—

भाद्रपदशुक्लदशम्यां शनौ
वै० सं० २०१६

श्रीभूपनारायणझा
वाराणसेयसंस्कृतविश्वविद्यालयस्य
सहायकप्राध्यापकः ।



## पाठसंशोधनम्

अस्य ग्रन्थस्य मुद्रणसमाप्त्यनन्तरं सरस्वतीभवनस्थानां साहित्यग्रन्थमातृकाणां सूचीनिर्माणप्रसङ्गेन तत्रत्याधिकारिभिः सूक्तिकथासमाख्याया गोकुलनाथरचितायाः कृतेरेका खण्डिता अपूर्णा च मातृकोपलब्धा । सा च कृतिः सूक्तिमुक्तावल्या अनन्या । शुद्धप्रायाया अस्या मातृकायाः सरस्वतीभवनस्थायाः संख्या ४३०७५ वर्तते । अत्र ८५–११५, ११७–११८ पत्राणि सन्ति । मुद्रितपुस्तकस्य ९० पृष्ठे २० पङ्क्तौ स्थितेन "मुक्तया चित्ररथतनयया सुलोचनया" इत्यादिवाक्येन मातृकारम्भः, १३० पृ० ११ प० स्थितेन "या चेयमात्रेय" इत्यपूर्णेन वाक्यखण्डेन च मातृकासमाप्तिर्दृश्यते । अत्रत्याः पाठभेदा अत्र संगृह्यन्ते । अभीप्सितः शोभनश्च पाठः कृष्णाक्षरेषु स्थापितः ।

| मुद्रितपाठः | हस्त०पाठः | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| ग्रा (साऽ) ह | **याह** | ९२ | ११ |
| त्राभ | **त्रासंभ** | ९४ | १९ |
| न्ती मयि प | न्ती अधिप | ९४ | ३१ |
| निजस्यात्मनोऽव | **निजस्याव** | ९६ | ५ |
| कुलकुलकुलाचल | **कुलकुलाचल** | ९७ | २ |
| तत्राग्नि | तदाग्नि | ९८ | २ |
| जनमर्द | **जनविमर्द** | ९८ | २९ |
| कूपक्षपाक | कूपक्षयाक | ९९ | ३१ |
| सागर | **सगर** | १०१ | ७ |
| तेन क | **तेन दिवा विघटितेन क** | १०१ | २९ |
| विभिन्न | **अविभिन्न** | १०२ | १३ |
| स्त्रुव | **स्त्राव** | १०३ | ५ |
| विटङ्क | विदङ्क | १०४ | ८ |
| रिदङ्गनानां | रि इन्दीनां | १०५ | १० |
| क्रमाप्र | **क्रम्यप्र** | १०५ | २९ |
| अवसित | **अवहित** | १०६ | ८ |
| मनका | **मनुका** | १०७ | ५ |
| तशिखरशि | **तशि** | १०७ | २४ |
| कलु | **कविलु** | १०९ | ५ |
| गुह्यकस्य दुहि | **गुह्यकदुहि** | १०९ | २६ |
| विरह- | **विरल** | १११ | ६ |
| रा तस्य | **रा तातस्य** | १११ | १० |
| पूरितया | **पूरिततया** | ११२ | १४ |

| मुद्रितपाठः | हस्त०पाठः | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| ति पङ्कपङ्कमे | ति कम्पमे | ११४ | ८ |
| किमपि | कमपि | ११४ | १७ |
| रदालिकै | रहालिकै | ११५ | १८ |
| णगा | णगणंगा | ११५ | १८ |
| तमु, क | ततक्र | ११६ | ११ |
| शमु (न्मु) खैर्ना | शद्भिरुर्ध्वमुखैर्ना | ११६ | ३१ |
| चिरा | अचिरा | ११८ | ५ |
| व सन्तु प | व प | ११८ | १२ |
| जरठ | जठर | ११९ | १८ |
| व तमेव पृ | व पृ | १२० | ३२ |
| हितः, द | हितो गवं हितः, द | १२२ | ६ |
| धररक्षि | धरक्षि | १२२ | १८ |
| मशरश | मश | १२२ | २६ |
| नः परि (प्र) | नः प्र | १२३ | २० |
| न्तशरव्यस | न्तसख्यस | १२५ | ३ |
| मुद्गरावद्य | मुहुरवद्य | १२५ | २० |
| वरस्य | वैरस्य | १२५ | २७ |
| न्ते, या | न्ते विग्रहपरिग्रहं (हे) वा प्रभवन्ति या | १२९ | २ |



# सूक्तिमुक्तावली

## गोकुलनाथोपाध्यायविरचिता

चिरपरिभ्रमणनिर्भरश्रमशिथिलपदक्रमो भ्रमरयुवा नन्दनवनप्राचीरस्फटिकशिलापट्टकठिनदलतलप्रतिहतव्यवसायवन्ध्यमनोरथो दैवमात्मानं चोपालभ्य निसर्गधीरेणात्मना गगनमुदपतत् ।

उत्पत्य गगनमार्गेण, विलङ्घ्य मातुलुङ्गवृतीः, स्तनभरावनतदैत्यदयिताद्युतिषु दालि(डि)मलतासु दर्शनप्रीतिमनुभूय, परितः परिभ्रम्य, सायन्तनप्रदीपसोदराणि चम्पकानि प्रत्युद्गल्यमान इव पवनधूतपुष्पधूलिधाराविवर्द्धमानमानाभिर्वनलताभिः, आ(हू)यमान इव भ्रमरव्रातपक्षवातवेपितपल्लवाङ्गुलिदलाभिरालिङ्गनाभिलाषा(ष)प्रसारितदीर्घाभिरुद्गृहीतमकरन्दार्घनिरर्घप्रसूनस्तवकाञ्जलिपुटाभिः प्रहर्षाञ्चितजरठदलरोमभिरमरतरुशाखाभिः, अनामयमनुयुज्यमान इव विभ्रमचलितकर्णाभरणपारिजातमञ्जरीनिलीनालिकुलगुञ्जितमुखरगण्डमण्डलया, उपपादितपाद्य इव गृहीतप्रमदसलिलसलीलसप्रत्यभिज्ञनयननिपातया, धौतकायकालिममलनिकाय इव दुग्धोदधिकल्लोलधवलबहलकरुणाकटाक्षसुधासारवर्षणवदान्यया, प्रतिग्राहितसितवसनप्रसाद इव दशनद्युतिसन्ततिगुणप्रोतसुभगस्मितसन्तानया, सन्तानकतरुमूलमणिवेदिनिषण्णया भगवत्या नन्दनवनदेवतया, दक्षिणेन पिण्डीषण्डवीथिमनुसरन्नाखण्डललक्ष्मीलावण्यनेपथ्यपरिग्रहम्, अनेकशः सुरासुरसमरदुरोदरपणायितात्मानम्, असकृदनुभूतकल्पावसानवर्द्धमानवार्द्धिवेलागर्भवासम्, अपरिमितमुद्भ्रान्तमन्दरभ्रमणिकामेठि(धि)भूतम्, अयुतकृत्वो मथ्यमानाज्जलनिधेरुत्थितम्, असंख्यम्, आलोकितसैंहिकेयकन्धरासञ्चारिसुदर्शनधारम्, अस्तोकवारम्, अमरलोकभूषणभूतम्, अद्यापि सत्यभामाप्रोत्साहितवासुदेवभुजयन्त्रपीडनलाञ्छिते मेखलापदे प्रणम्यमानम् आलोकालोकधरणिलोकसञ्चारिणा साक्षात्कृतचतुर्दशभुवनेन भगवता ब्रह्मयोनिना नारदेन, साम्प्रतमपि द्वारकागोपुरप्रवेशवामनशिखरतया खर्वीकृतसुपर्वनायकाहङ्कारमनुहरन्तम्, अधुनाप्युपमूलमुत्सिक्तयदुकुमारसरकसीधुरससेकवासितम्, इदानीमपि दामोदरसुन्दरीशयकिसलयलूनपल्लवाग्रप्रत्यग्रसौभाग्यम्, अस्मिन्नप्यनेहसि कादम्बरीमदमुह्यमानकामपालभुजमूलावष्टम्भन्युब्जबन्धुरस्कन्धदेशम्, अत्रापि समये स्मृत्वा भगवतश्चराचरगुरोरवनि-

मवतीर्णस्य नारायणस्य भुवनपावनानि प्रसूनलवनव्यापारितपाणिपरिमर्षसुखानि नवनवोन्मेषिकुड्मलपुटपटलच्छलेन हृष्यमाणरोमाणम्, अनवरतचलत्प्रवह-वातवेल्लितविटपवल्लिपल्लवावलिवलितव्योमगर्भतया सगर्भप्रणयादिव जलधिकीलालकल्लोलकुक्षिविलसदतुलकीलाकलापललितौर्वलीलामभिनयन्तम्, अमृतकरक्रोडहरिणरदनदष्टदलप्रकरापराधानपि सहजसम्बन्धस्नेहवशेन सहमानम्, अच्युतोरःस्थलनिवासदुर्ल्ललितस्य कामदु(हो) मणेः कौस्तुभस्य स्थूलक्षताभारोद्वहनसाहायकेन प्रकटितसोदरसदयहृदयम्, आत्मच्छायाधिवासविश्रमव्यपगतविश्वभ्रमणश्रमां श्रियं देवीमशेषजगतो गरीयसीमपि शाखाभुजेनोद्वहन्तम्, अथ(च)स्वसृस्नेहेन किसलयकरलीलया लालयन्तम्, इत इतो नलकूबरकराकृष्टनीविविवसनव्रीडमानरम्भासविभ्रमाश्लेषरसज्ञप्रकाण्डस्तम्भम्, अपरतः पुरन्दरपरिभोगसमये सुरतावसानसत्रपोर्वशीप्रार्थितवसनोत्क्षेपकुतुकतरलशाखाग्रम्, अन्यतो मानमन्युताम्यत्तिलोत्तमानिःश्वासचलितदलवलयम्, इतरतो रतान्ततान्तघृताचीश्रमस्वेदसन्दोहतस्करपत्रव्रजव्यजनम्, एकतः सहजविलासालससहजन्याजघन्यसिचयनिचयधुवनधन्यजन्मना निधुवनावसानावसन्नशचीसाचिस्मितसूचितसौभाग्येन सुरीसुरतपरिमलपिशुनेन मातरिश्वना प्रियसखेनेव परिरभ्यमाणम्, मधुसमयमिव प्रभूतमधुमक्षिकामदम्, शिशिरमासमिव नतो(ता)मरसभाजनम्, कुग्राममिव मदोद्धूतसकलत्रपामरंजनसेवितम्, कामिकण्ठमिव सुरतरुताविद्धित्तम्, अमरद्रुमाणां प्रवरं ददर्श ।

प्रेक्ष्य दूरत एव, पारिजातमवलम्ब्याम्बरादवनिमुपगतः, प्रसारितदीर्घेण चरणचतुष्टयेन दण्डवत्प्रणिपत्य, अग्रिमेण करद्वयेन बद्धमञ्जलिपुटमाधाय मूर्द्धनि, धन्यजन्मानमात्मानं मन्यमानो मनसि चिरमचिन्तयत्—

सोऽयममरलोकभूषणं भगवान् पारिजातः, यस्य वनीयकजनकामसीमानमतिवर्त्य वर्त्तन्ते शाखैकदेशशायिन्यश्चतुर्द्दशलोकसंपदः, येन परहृदयवेदिना प्रार्थनाभङ्गभयवैलक्ष्यरूक्षगद्गदाक्षरनिगदानि दीर्घदारिद्र्यनिश्वासविवर्णाधरपरिमर्षमलीमसानि जातुचिदपि दीनजनयाचनवचनानि न श्रूयन्ते, न च वदान्यानामग्रगणनीयेन वसुव्ययमगणयता कदापि बध्यन्ते पल्लवपुटमुष्टयः । यस्मिन्नवितृप्तपुरन्दरनयनसहस्रप्रेक्षणीयलावण्ये सुरासुरसमरलास्यसूत्रधारी, धरापतिसहस्रमदान्ध्यकादम्बरी, नारायणोरःस्थलनिकषपाषाणकनकलेखाविवेका, अमृतार्णववाडववीतिहोत्रशिखा, चतुर्द्दशभुवनविप्रलम्भेन्द्रजालपिच्छिका, द्रविणतृष्णादवथुदूयमानलोकलोचनमरीचिका, भगवती लक्ष्मीस्तृणमिवावधीरिता क्वचिद्विटपान्तरे सर्वात्मना निवसति । यत्र मन्दरमन्थानकावर्त्तितक्षीरोदनवनीतममृतमपि मकरन्दव्यपदेशान्तरितजन्म प्रीणयत्यमर्त्यान् । एष तो निवासाय परमेष्ठिना

कल्पितो नाकनायकवल्लभो नगनायकः। स खल्वसौ दिष्टचा चिरप्रोषितेन मया दृष्ट इति।

अथ प्रदक्षिणक्रमेण दक्षिणेतरां पारिजातशाखामासाद्य तत्र मधुमाद्यद्लिमिथुनोपकल्पितमकरन्दपाद्यानि कतिचन निकेतनानि भ्रमरकुटुम्बिनामक्षेपक्षमो विललङ्घे।

व्यतीत्य लोकोत्तरगार्हस्थ्यसुस्थमिथुनान्यगर्हणीयानि षट्पदोदवसितानि, विघटमानहाटकलतातन्तुग्रन्थिसन्तानशिथिलसन्धिबन्धेन, चिरतरानुपभोगविरसघनीभूतमकरन्दभारभुग्नोपरिभागेन, पवमानप्रेरितपुष्पधूलिसञ्चयधूसरोपद्वारेण, स्फुटितकुड्मलपुटकपाटघट्टनत्रुटितकेसरार्गलेन, जरठदलप्राचीरेण परिक्षिप्तम्, उद्भूतभूरिदलनिर्गमग्रन्थिदर्भसूचिसूचितस्वामिप्रवासया व्यपगतप्राकारपरिकर्म्ममुद्रितप्रणालीनिरुद्धमधुवर्षपरिवाहपिच्छिलया परिगतमजिरसीमया विनमितपटलपत्रतिरस्करणादविभाव्यदेहलीदेशेन जीर्णच्छदच्छदिरन्तरालगलितमकरन्दातिवर्षविशीर्णपरभागेन माक्षिकोक्षणसंकलितपरागपङ्कनिर्मितायां भित्तेरीषदवकल्पितायां भित्तेरिव शिष्यमाणेन भित्तेन किञ्चिदुत्तम्भितनीव्रम्, अतितीव्रविप्रयोगबाधितमधुकरवधूश्वासविवर्त्तैरिवावर्त्तितेन तन्तुवायनाभितन्तुवितानेन म्लायन्मधुपरिपाकाश्मत्तकम् आत्मनो वेश्म पश्यन्नचिन्तयत्—

हन्त! गोपुरपरिसरप्राप्तमेव मामितरसहचरीकरावलम्बिना करयुगलेन शिष्टचरणचतुष्टयेनातिमन्दसञ्चारिणी श्रमप्रमदसंभेदप्लुतस्वेदसलिलस्तिमितसंकुचितपक्षविततिरभ्युद्गत्य कण्ठे कथं नाग्रहीत्? किमिति वा वृतिविवरव्यापारितलोचना भवनासन्नभूमिसीमनि मामागतमालोक्य ससंभ्रमत्वरितपदमागत्य प्रहर्षप्रसारिततनुतरबाहुतन्तुद्विगुणवेष्टनेन नालिङ्गितवती? कस्माद्वा कारणादविरतपदानन्दबाष्पसलिलबिन्दुसन्दोहस्नपितस्कन्धबन्धस्य मम परिरम्भरभसप्रसारिणो भुजस्य मूले निजमाननं न न्यवेशयत्? कुतो वा हेतोर्द्वारदेशनिरन्तरे मयि गृहीतमकरन्दोदपूर्णपल्लवपुटकुम्भा मूर्त्तिमतीव प्रवेशमङ्गलसम्पदग्रतो नातिष्ठत्? केन वा निमित्तेनाङ्गनाभ्यासमभ्यागतेन ससंभ्रमपरिजनोपनीतपरार्द्ध्यकेसरासनमध्यासीनेन मया बलादनिच्छन्त्यप्यासनैकदेशे समुपवेशिता परिणतिकठिनतामप्राप्तेन व्याकोषकल्पकल्पद्रुमकुसुमरसेन क्रमादेकशो दीर्घाध्वश्रमदूनान्न मम चरणानक्षालयत्? कस्मिन्नर्थे देहलीपुरोभागगोचरमिमं जनमादाय करेण करमन्तर्न प्रवेशयति गृहिणी? तत्किमवधिदिनाधिकप्रवासापराधिनि मयि प्रणयकुपिता भवेत्? उत चिरविरहदुर्भगापि जीवामीति लज्जया निलीय तिष्ठेत्? आहोस्विदनेकशः स्वप्नसंकल्पसहस्रोपकल्पितसमागम-

भ्रमविप्रलब्धा सदपीदमस्मदागमनमन्यथा मन्यते ? किंस्विदस्मद्भिरहितादस्मात् प्रदेशादपहृत्य केनापि क्वचिदनीयत ?

स्मरन्ति खलु मृगयाव्यसनव्यासक्तेषु पाण्डवेषु पञ्चालपतिदुहितरं याज्ञसेनीं सिन्धुराजो जयद्रथो जहार। मारीचमायामनुसरति भगवति भार्गवगर्वपर्वतपवौ रघुपुङ्गवे पुराणराजर्षेः सीरध्वजस्यायोनिजन्मानं तनयां मैथिलीं मन्दोदरीनायकः परगृहनिवासवचनीयतां निनाय। दवीयसि गन्धर्वकुले विश्वावसुनन्दनां मदालसां नाम पातालकेतुरपच्छिद्य रसातलविवरं प्रावेशयदिति।

कृतममीभिरथवा विकल्पविडम्बितैः। नूनमस्मि दुरात्मना मन्मथहतकेन मुषितः। मदनशरविद्धमर्म्माणो महामुनयोऽपि दुशान्तरमनुभवन्ति, किं पुनरल्पप्राणो दयितजनविरहनिस्सहस्तिर्यगबलाजनः।

श्रूयते च कुवलयाश्ववल्लभा गन्धर्वकुलकेतनपताका मदालसा दानवालीकवचनवञ्चिता सकललोकलोचनसुभगं वपुरजहात्। द्विजपतेर्वल्लभस्यातिवल्लभामात्मतनुमत्यजदलीकवल्लभनिधनश्रवणविक्लवा लीलावतीति। सर्वथा भीषणमिदं विरहिणां किमपि तत्त्वान्तरं यदनङ्गा(ङ्गो)नाम। तथा हि—

धूर्ज्जटिललाटतटकृपीटयोनिपुटपाकविशुद्धमुच्चाटनचूर्णभस्मेदमुन्मदयति विश्वम्। अनेन नीललोहितलोचनप्रदीपकज्जलेनानवरतरुदितताम्रनयनच्छविच्छटानुविद्धरतिशोकबाष्पसलिललाक्षारसावसेकलब्धद्रढिम्ना यावदाश्रयावस्थायिमोहतमोलाञ्छनलिपये मसीभावमुपगतेन किं न मलिनीकृतं यदमुना स्पृष्टमुज्ज्वलं वस्तु।

अथ च किमत्र विचित्रम् ? यदस्य मदनस्य शरव्यभूतानि भूतानि दशमीं दशामासादयन्ति, यावदनेनात्मकरपरिमर्षलालिताः सायकाः, स्वप्रियसखेन मधुना सततमनुरुध्यमानाः सुरतरवः, निजजनकस्य मनसो नियतसहचराः प्राणतां प्राणाः, स्वस्य सर्वस्य वा परायणभूतानि महाभूतानि, निजैकतानानि करणानि तन्मात्राणि च पञ्चतामनीयन्त। नास्ति स विषयो यदस्य सायकानां लक्ष्यं न भवति, शरा वा यस्मादपराध्यन्ति, विद्धोऽपि वा यः प्रकृताववतिष्ठते। तन्नूनमनेन दुरात्मना मन्मथहतकेन विगतदयेन दैवेन वा परिवर्त्तितमात्मनः संसारमवधारयामि। हन्त? कमर्थमनुरुध्य धारयामि जीवितम्, अथवा विपदि धीराः साधवो भवन्तीति निरूपयामि तावदन्तस्सदनमिति।

इत्थमनेकधा तत्तदशङ्कनीयमाशङ्कमानो विनमितवलीकपिहितदेहलीकमवभुग्नवलिकाति(रोहि)तमन्तर्भवनमतिसंकुचितपक्षतिचरणतया कृच्छ्रेण लब्धावकाशः प्रविवेश।

प्रविश्य तु वेश्मकोणैकदेशोपकल्पितपल्लवतल्पे परिकल्पितशयनाम्, पुरः पश्चात् पार्श्वयुगले च सरलप्रसृताभिरपरिलक्ष्यसंधानग्रन्थिभिरग्रभागस्यूतशयनकिसलयाभिश्चरणसूचिभिः षड्भिरभितः पातालतलादुद्गताभिरन्धतमसशलाकाभिरिव विद्धाम्, उन्मुच्य शरीरमपसरन्तीभिरनङ्गशरवैश्वानरप्लोषमलिनाभिरन्तःकरणषष्ठाभिरिन्द्रियचेतनाभिरिव स्तोकेनापरित्यक्ताम्, असमचारशिलीमुखपतननिर्व्यथनमार्गैरुत्पतन्तीभिरान्तरतिमिरधाराभिरिव परिवृताम्, अखिलतनुपरिपूरणोद्वृत्ताभिरसितवर्णपरिवाहिकाभिरिव परिक्षिप्ताम्, अपज्यकार्मुकषष्ठाभिरीशानलोचनहुताशनावलीढनिर्वाणाङ्गारभूताभिरनङ्गेषुभिरिव युगपन्नुद्यमानाम्, जरठरासभजठररोमधोरणिधूसरेण धरणितलविप्रकीर्णपक्ष्मलपरभागेन संकुचितसंहतमूलेन तिर्यगवलम्बिना छादितपार्श्वचरणेन छदयुगेन महति मोहसरसीव प्लवमानाम्, अनवरतरुदितोच्छूनलोहितेन गुणवता लोचनपुटाङ्कु(र)द्वयेन दन्तुराम्, पतिव्रतदेवताग्रैवेयमरकत(मणिश्रे)णिमिव मन्युवेगवेपितवक्षस्तटत्रुटितहारयटिम्रष्टाम्, आविर्भवत्प्रलयभावभुग्नकन्धराबन्धविलम्बितेन चुम्बितकल्पतरुच्छदोकल्पिततल्पप्रच्छदेन कूणितत्रिभागपरिवर्त्तिततारकाक्षेण मुखेन कामभिया भूतलमिव प्रविशन्तीम्, अविरतपतितपरागपुञ्जसवर्णेन वैवर्ण्येन पाण्डिमानमुपनीयमानाम्, अपराधमार्जनाय गृहीतपाशुपतव्रतस्य रतिपतेरक्षसूत्ररुद्राक्षगुटिकामिव ज्वलदतुलवियोगानलदग्धप्रवासिप्रेयसीप्राणभसितोद्धूलनधवलाम्, अवलग्नकृशिमशङ्कितमध्यभागभङ्गाभ्यामसङ्कु चितप्रतीकायत्ताभ्यामुत्तरावरशरीरशकलाभ्यामाश्लिष्य शचीशशाखिशाखाम् अयि जननि ! मयि न हास्यसि सौहृदमितीत्थमिवापृच्छ्यमानाम्, अपगतजीविताशाभिः सहचरीभिरिव चेतनयापि चिरादुन्मुक्ताम्, असुगमागमनिरोधवशेन साङ्कल्पिकदयितसमागमसमाधिमिवाभ्यस्यन्तीम्, अवधिदिवसलङ्घनोदयदनिष्टशङ्कातङ्कमूर्छितामात्मनः कुटुम्बिनीमुदीक्ष्य हा ? किमेतत् ! इति सत्वरमुपसृत्य पृष्ठे पाणिना पस्पर्श ।

अथ भ्रमरवरारोहा पीयूषरसवर्षसेकेनेव प्रियस्पर्शेन प्रत्यापन्नचेतना परिचित्य प्रियतमम्, त्वरितमुपसृत्य, परिरभ्य, पादयोः पतित्वा, परिकल्प्य कल्पपादपपल्लवासनम्, उपपाद्य कुसुमरसपाद्यम्, अभिसंवाह्य चरणान्, उपनीय मकरन्दनिष्यन्दमयमभ्यवहारम्, इतरपरिचरणव्यापृता कृतमतिश्रमेणेति मधुकरयूना बलादङ्के निवेशिता मन्युहर्षसंभेदगद्गदमंगदत्—

कच्चिदनामयमकारणचिरप्रवासव्यसनिनो वीतकरुणान्तःकरणस्य बन्धुलोकाननुबन्धिव्यवसायिनो भवतः ? ननु भवानध्याससाद मध्यमं संसारम् ? अपि स्विदास्वादितवानसि स्म वसन्तविरहसहानामुपरि जलधरजलधारया अधस्ताच्च

सारणीसलिलसेकेन धौतानामृतुगणद्वन्द्वविमर्दविषहाणामवनिवीरुधामन्तराल-विच्छिन्नप्रसवप्ररोहरमणीयेष्वधोमुखरविकरसंपर्कप्रबोधिषु रुचिवैवर्ण्यप्रचयापच-यादिविकारवैचित्र्यचरुषु क्षतिपयनिमेषपरिवर्त्तितनिशादिवसत्वरितसंकुचितविक-चेन संवर्त्तिकानिचयेनोदन्यादूनानि (च) ञ्चरीकमिथुनानि लोभयत्सु कुसुमेष्वभि-नवोद्गममृदुस्वादूनि विविधरसानि मधूनि ?

अये ! विट ! परदारलम्पट ! कपटपटो ! ष (ट्पद) कुलटानां कृत्रिमेण मदनमूढमानसान् मोहयता हावेन नूनमसि वञ्चितः, न चेदियन्ति दिनान्य-वधीरितावधिसमयम्, अगणितानन्यशरणतरुणगृहिणीप्रणयबन्धम्, अपहस्तित-बन्धुजनानुबन्धम्, अनपेक्षितसुहृत्परिचयम्, अमुत्र मध्यमेऽप्युभयस्माल्लोकादधरीणे भुवने कथमवाहयः ? सुचिरमपि परामृशन्ती न निश्चिनोमि मर्त्येष्वमर्त्याना-मतिविश्रम्भसंभावनम् ।

श्रूयते हि तत्र विचित्रव्यवसायशतपत्रकौमुदी, पुरुषकारमिहिरमहो-निशीथिनी, क्रियोत्साहमहार्णववेला, बलविटपिविटपभङ्गवात्या, सारिणी-सलिलभङ्गुरशरीरवलिभङ्गवीचिनिचयप्रसारणपवनधारा, पलितबिसतन्तुसन्तान-प्रसवपद्मिनी विस्रसा नाम वयः, चेतनापहारि प्रथमममङ्गलानामर्वागपि संवर्त्तान्निधनं नाम दशा, विविधव्याधिदुस्स्थानि विषमोद्घातप्रतिहतपर-तन्त्रगमनानि पूयभूयिष्ठावयवानि निरर्गलषडरिवर्गनिसर्गोपप्लुतानि वपूंषि, क्षणविपर्यस्तोत्तराधराः क्लेशसंभिन्ननिःश्रेयसा विवेकविकलप्रायसकललोकाः समयाः, भगवन्तं धर्म्ममप्यतिक्रम्य प्रवर्त्तितानि, समयमप्युल्लङ्घ्य व्याहृतानि, संस्कारमप्यतिवर्त्य वर्त्तमानानि, तत्त्वमविविच्यापि विप्रलम्भायोदीरि-तानि, वस्तुवृत्तमन्यथाप्युल्लिखन्ति, व्यतिपत्याम्नायमप्युद्भूतानि, वञ्चनाभूयांसि वचनानि, मत्सरसमुत्सारितगुणप्रसरा दोषप्रकर्षसीमभूमयः । तदात्वायतिविभाग-विज्ञानमुषितचित्तवृत्तयः, मृषाप्रशस्तिशतप्रतारिताः, लोकायतवस्तुमात्राभिनि-वेशिनः, विषयमृगतृष्णाविप्रलब्धकरणहरिणाकृष्टा नाम्नायमुपजीवन्ति, न ज्यायसामनुभूतश्रोतव्येषु वचनेषु वर्त्तन्ते, न दण्डनीतिपण्डिताः परबलोपजाप-जर्ज्जरां प्रजां परिपालयन्ति राजानः, न विज्ञानवृद्धाननुरुध्यते जनता ।

इत्येवंविधविविधोपप्लवानामायतने मध्यमभुवने निबध्य रतिं बान्धवानवधीर-यता त्वया कतरत्प्रयोजनमुपपादितम्, कतमस्य धर्मस्य राशिरभिवर्द्धितः, कियन्ति निःश्रेयससाधनानि संचितानि । नूनमेवंविधवन्ध्यव्यवहारिणा त्वया परिभूता त्यक्ष्यामि दयितदुर्भगमिदं वपुः, न चेदावेदयिष्यस्यवधिदिवसावधीरणकारण-मित्यभिधायायतश्वासविच्छिन्नामवर्षदश्रुधाराम् ।

अथ विततपक्ष्मलपक्षाग्रमार्जितवाष्पसलिले सलीलकरकिसलयोत्तम्भितचिबुके केतकपरागधूसरपाण्डिमविवर्णगण्डपालिनि प्रेयसीमुखे त्रपावनतपक्ष्म निक्षिप्य चक्षुराचचक्षे विलक्षवदनो मधुव्रतः—

विचक्षणे ! क्षमस्व। नापराध्यत्ययं जनः। निशामय तावदावेदयाम्यात्मनो वृत्तम्। इतो यावदमरसरित्प्रवाहमनुगम्य प्रतिनिवृत्तायामीक्षणपथातिवृत्तायां त्वयि दूरमुत्पत्य तिर्यगनुसरन्नहम् इदं तदेव किमपि कस्यचिद्विषतरोर्निकषपाषाणखण्डमसृणं कुसुमम्, यस्य फलं राहुरित्यशङ्किषि भयभ्रश्यदेणदुःस्थितक्रोडेन चकितहंसकुलपरित्यक्तशिथिलरथेन चन्द्रमसा। मयाप्यननुभूतपूर्वप्रेयसीविरहदवथुदूनेन दूरतो विलोक्य लाञ्छनश्यामलोदरमभिनवदधिच्छेदधवलमिन्दुमण्डलमित्थमतर्क्यत—

सेयमावासभूमिरादित्यानाम्। एनामद्यापि न त्यजति पितृपक्षपक्षपातापेक्षणी यमुना। नूनमितो विश्रामभवनादेकशो निर्गत्य मासि मासि भुवनप्रकाशमवसानसमय युगपदाविर्भूय भुवनभङ्गाय संवर्त्तमेव निर्वर्त(य)न्ति मार्त्तण्डाः। किंस्विदनृतमुदीरयन्ति वडवामुखादौर्वोत्पत्तिरिति। जानाम्यमुष्मादेव प्रियविरहव्यथितप्रवासिजनवेदनीयसंज्वरादतिमलिनधूमधारामलीमसगर्भादुद्गत्य विस्फुरन्ति स्फुलिङ्गाः, ये सलिलबिन्दूनिव सप्तसागरानशेषतः शोषयितुमारभन्ते। भवतु, परिहृत्यैनमधो भुवनान्यालोकयेयमिति मनसि निश्चित्य परिहृत्योड्डीनमवडीनया गत्या दूरमवालम्बिषि।

अथ पिण्डीभूतं त्रयीमयं तेजो रविसंज्ञान्तरितमपसव्यवलनया प्रदक्षिणीकृत्य, प्रणम्य, सपरिचयस्मितमभिवीक्ष्यमाणो वैमानिकैः, इलावृतं दक्षिणेन भरतकिंपुरुषवर्षयोरन्तरालसीमनि विलम्बितः, कमठराजपृष्ठनिष्ठुरशिलाप्रत्युप्तमूलम्, आभोगपूरितवसुमतीसन्धिवन्धम्, उपमूलनिलीनमेघमधुकरप्रकरकलरवमुखरम्, अमृतकरक्रोडहरिणविषाणकण्डूयाकषणोल्लिखितमेखलामृदम्, अश्रान्तरविरथतुरगखुरटङ्कखण्डितकटकोपलम्, अनवरतविश्वभ्रमणखिन्नग्रहगणविश्रामपावनशिलातलम्, उडुगणकुसुमस्तबकितसानुसीमवनस्पतिम्, उपरिजगद्गोलकपालाभिघातप्रतिहतविवर्त्तिवातव्रातपूरितपातालगभीरपाषाणप्रदरोदरम्, आकाशगङ्गातरङ्गाभिघातस्खलितगण्डशैलपातभीतचकितापसृतवैमानिकनिकरपरिहृतोपान्तवर्त्मनिम्, उत्तानपादतनयपदादीषदर्वाञ्चम्, उल्लङ्घितलोकत्रयेण भगवतस्त्रिविक्रमस्य पदक्रमेण शिखरोपकण्ठेऽपि न प्राप्तम्, उद्ग्रीवेणामरगिरिस्पर्द्धावर्द्धमानेन विन्ध्याद्रिणाप्यदृष्टदैर्घ्यपर्यन्तम्, अरुन्धतीकमण्डलुपरिपूरणपूतेन मैत्रावरुणेर(घ)मर्षणाभिषेकशेषेण गगननदीपूरपरिपूरणोद्वृत्तेन श्रान्तरवितुरगाचान्तोज्झितेन कटकतटधातूपलालिङ्गनकपिल-

तया सततदर्शितसन्ध्यारागैः कुटिलतडिल्लताविडम्बितमृडललाटलोचनरुचिपिशङ्गचन्द्रकलैर्मुदिरैर्गगनपथ एव प्रतिगृह्य भुवं प्रापितेन धूर्जटिजटाजूटप्रतीष्टभागीरथीप्रवाहमनुहरता ध्रुवपदादिव पतता ब्रह्माण्डविदरविवरादिव लम्बमानेन ताण्डवप्रसक्तस्य भगवतो गगनमूर्त्तेरष्टतनोरीशानस्य पलितधवलेन जटापाशेनेव शिथिलबन्धम्, स्खलता रतान्ततान्तगन्धर्वमिथुनश्लाघनीयशिशिरतरशीकरोत्करेण निर्झरेण पावनप्रस्थम्, अन्तर्निलीनजरदजगरश्वासविषधूमधारया छायापथसहस्रसंकुलमिव गगनगर्भं वितन्वतीः, ऊर्ध्वमुखरविमयूखदुरारोहप्रपातावलम्बितशाखाग्रैर्मूलावदारितशिलासन्धिभिर्लतावितानैरदत्तपवमानप्रवेशाः, कुलिशकोटिभिरप्यभेद्यैः, क्रकचशतेनाप्यच्छेद्यैः, कल्पान्तोदितद्वादशदिनकरकरप्रकरेणाप्यदाह्यैः, युगपत्प्रवृत्तसर्ववातवर्गेणाप्यनुत्सारणीयैः, अनेकयुगसंचयघनीभूतैः, महाभूतानां तृतीयं ज्योतिर्नाम विद्विषता केनापि प्रजापतिनोत्पादितैस्तमोभिरभिलिप्तगर्भाः, प्रलयक्षपाव्रततिव्रातबीजसङ्कलनकुशूलिकाः, कुहूकल्लोलहेलाप्रसारणवारिधिवेलाः, कालरात्रिचिकुरसंयमनमुष्टिसोदराः, संसारघस्मरकालकूटसिद्धाञ्जनसमुद्गकस्य शितिकण्ठकण्ठस्य युगावसानयोगनिद्राप्रवेशपिहितकरणद्वारस्य नारायणोदरस्य च श्रियमनुकुर्वतीः, (आ) पातालगम्भीरा गुहा बिभ्रतम्, ब्रह्माण्डखण्डाभिघातभीतिभुग्नकन्धरसञ्चारिभिरधोमुखममरावतीपौराणां वलभीविहारमवलोकयद्भिः सिद्धमिथुनैरधिष्ठिताधित्यकम्, अद्यापि पाण्डवगाण्डीवघोषभ्रमचकितैरधोविलम्बितशिथिलश्रवणपुटैर्जरजर्जरकुटिलदशनकोटिभिर्वनवराहवरैः श्रूयमाणमेखलामुदिरगर्जितम्, अधुनापि धनञ्जयस्य धन्यास्तपोवीरव्रतसंभवस्तोत्रगाथाः सरोमहर्षं गायद्भिः किन्नरकलत्रैरुपासितकन्दराद्वारम्, इदानीमपि चराचरसर्गप्रलयसाक्षिणो धराधरसुतावल्लभस्य परापरपुरुषोत्तमस्य शबरवेषविडम्बनं ध्यायद्भिः प्रमथैरध्यासितपुण्याश्रमम्, ऐषमोऽपि विषमाक्षसव्यसाचिनोरनायुधप्रधनध्वनिमनूच्चरद्भिरुलूकलोकैराकुलिततापिच्छच्छायवीथिम्, आयतनमाश्चर्याणाम्, अमरासुरसमरमिव तारकोपमर्दसहगुहम्, सन्ध्यासमयमिव कालिकादर्शनोत्कण्ठितनीलकण्ठताण्डवमण्डितम्, गीतमिव ध्रुवपदम्, त्रिविक्रममिव पादाक्रान्तभुवनम्, सम्राजमिव सर्वभूभृतामुपरिवर्तमानम्, पुंश्चरितमिव न धातुरहितम्, इन्द्रकीलमचलमालोक्य मनसि किञ्चिदचिन्तयम्—

अयमसौ दर्शनीयानामवधिरभिवीक्षितः, दृष्टा सीमभूमिराश्चर्यग्रामस्य, विलोकितो ग्रामणीस्तुङ्गात्मनाम्, अधिगतमियत्त्वमगाधमूलानामान्तरतम्यस्य, निर्द्धारितो मध्यमस्तम्भो ब्रह्माण्डमण्डपस्य, तर्कितं तारल्यपरिहारनिबन्धनमवनेः, उन्नीतो वेधसा मुहुर्मुहुरर्णवाणसि मज्जितोन्मर्ज्जितस्य जगतीगोलकमण्डलुनो ग्रीवादण्डः, प्रतिपन्ना प्रलयपारावारपयसि प्रवेष्टुमुद्यताया मेदिन्या गाधमानयष्टिः, अभ्यूहितो

भुवनगोलघटनविघटनपटोरादिपुरुषस्य महाभूतबीजकोषः। जानाम्येतादृशस्थलनिवासस्य नैसर्गिकं फलमिदं यदखिलमेव लोकं करतलामलकवदवलोकयन्ति सिद्धाः। मन्ये च सप्तग्रहलोकपुटभेदनपुटभेदनसूचिरियं सीव्यति विधिनखखण्डितं जगदण्डखण्डद्वयम्। ननु यदवदानविदो वदन्ति वराहशरभयोर्भरमसहमानायामकाल एवोद्वेलजलधिसलिलमग्नायामवनौ वस्तुजातबीजव्रजपूरितान्तरां तरिं कुत्राप्यविप्लुते वस्तुनि मनुर्निबबन्धेति। वेद्मि तदेवेदं ध्रुवविभेदिशिखरसूचि किमपि तत्त्वं दृश्यते।

अस्य हि किमेतैः कपिप्रवरपरिक्रमणगोष्पदैरगस्त्याचमनचुलुकबिन्दुभिरौर्वोषर्बुधावलेहहविःकर्षैः सप्तभिः सगरसुतखातगर्तैः, एतादृशैः सहस्रेणापि यथाबलमुद्वेल्लितैर्मेखलापि खलु दुर्लङ्घ्या, कैव कथा यदेतस्य सानुसीमानमपां राशयः प्लावयिष्यन्ति। यदैनं नक्षत्रमणिगणकिर्म्मीरैर्ग्रहभ्रमणचक्रकटकैरलङ्कृतमुत्क्षिप्तं बाहुमिव मेदिन्या महागिरिमारोढुमारभे तदा मेरुमयकनकवल्मीकलङ्घनविधावप्यजाङ्घिकों विचित्रवस्तुदर्शनाक्षिप्तश्च किमेकेन कतिपयब्रह्ममुहूर्त्तपर्यवसितेनायुषा, यावदीदृशं पुरुषायुषसहस्रमप्यवसाद्य नास्य सानुसीमानमासादयेयम्, तत्प्रसादयामि, क्षमतामसौ महात्मा मद्व्यतिक्रममिति प्रार्थयमानः, प्रणिपत्योत्थाय किञ्चिद्वारुणीमाश्रित्य दक्षिणां दिशमभिवर्द्धमानया प्रतिगजशङ्काक्रोधान्धगन्धगजप्रतिहतश्यामगण्डशिलाभिघातभग्नदशनमुसलसहस्रविषमवर्त्मना, वनवराहदंष्ट्राङ्कुश (र) कल्पितकर्णाभरणाभिः, असितवर्णमेषोर्णगुणयोजनविवर्द्धितायामनिसर्गह्रस्ववेणिबन्धाभिः, उत्तानवराटकश्रेणिविडम्बितसीमन्ततटाभिः, अजगरनिर्म्मोकविपुलक्षौमपरिकरदृढावनद्धकम्बलाधरीणनिवसनाभिः, अनवरतघरट्टघर्षणकिणकठिननितम्बपट्टघट्टननि (ष्पिष्ट) शिलातटाभिः, अजस्रधातुरजस्सिन्दूरलिप्तालिकलुप्तालकाभिः, आनाभिलम्बगुञ्जादामपुञ्जाभिः, अतिपुराणशाणपटकु (कू) र्पासकपटपटकूपकष्टावस्थायिकुचघटाभिः, उद्वेल्लनक्वणितकालायसवलयवल्गुव्यायामपीनबाहुभिः, निगृहीतसिंहदशनदंशव्रणप्ररोहविषमप्रकोष्ठाभिः, गुरुतरकरण्डभारभुग्नपृष्ठाभिः, (अत्य) क्तरज्जुपाशनिषक्तवनमहिषविषाणभूदाराभिः, शबरपुरपुरन्ध्रिभिरुपस्क्रियमाणोपलप्रायाटवीकेदारया, दारोपजीवनसुस्थम्मन्यग्रामप्रधानपुरुषया, पादपर्वतविपिनवीथ्या कियदन्तरं गत्वा तरङ्गतरलिमसत्त्वकम्पवेपितावयवाम्, पदे पदे विषमोपलोद्घातस्खलितोत्थिताम्, दक्षिणं सिन्धुनाथमभिसरन्तीमलकनन्दामलङ्घिषि।

तस्यास्तटे तु धर्मसधर्मिण्यां मूर्त्ताववतीर्णस्य लोकानुग्रहगृहीतविग्रहस्य भगवतो नरसखस्य नारायणस्य चरणरेणुकर्षणपावनैः, अमृतनि (ष्य) न्दस्वादुभिः, कलङ्कविवरवर्त्मना चन्द्रसारैरिव विगलितैः, तुषारसंघाततुषावशेषस्य

गौरीगुरोर्गिरिराजस्य सत्त्वैरिव परिस्रुतैः, उशीरेषु प्रसरन्तीनां शिशिरगुणकलानामिव नीविधनैः, कदलीवीरुधामिव कर्पूरधूलिभसितोद्धूतकापालिकव्रतोपदेशगुरुभिः, मृणाललतानामिव दवथुदूनजनदुःखानलक्षपणदीक्षणाचार्यैः, निरीक्षणमात्रेणातिमात्रतृषापहारिभिः, अतितुषारैः, अनेकहेमन्तप्रसवजरायुभिः, पवनजर्जरैस्तरङ्गसलिलैरपनीतक्लमो दक्षिणस्यां ककुभि चक्षुरक्षिपम् ।

अथ मैत्रावरुणिसहस्रेणाप्यशोषणीयाभिः, औवँनिखर्वेणाप्य (प्लो) षणीयाभिः, दाशरथिशतेनाप्यलङ्घनीयाभिः, प्रतिबिम्बसंक्रान्तसर्वलोकनिर्भरगर्भाभिः, आपातालगभीराभिः, अहिराजफणफलकविष्टब्धमूलाभिरद्भिः पूरितया, विकटतरतटनिकटनटदतिबहलपिचुलतरुनिचयविगलितविकचकुसुमनिकरपरिमलसुरभिपरिसरया, तीरपङ्कप्ररूढनलिनलोभभ्रमद्भ्रमरप्रकरद्विगुणितान्धकारया, कैव कथा तरणिकिरणानां यावदनेकविधोच्चावचमण्डलतिर्यगादिगतिकुशलेन मातरिश्वनाप्यल (ब्ध) प्रवेशया, कज्जलाचलोद्गमखनिलेखयेव, पातालतिमिरतमालतरुबीजव्रजसन्तत्येव, बहुलनिशीथिनीव्रततिव्रातमूलशलाकयेव, तत्कालवेलागर्भोत्थितकालकूटकिशोरग्रसननिर्दयात् कपर्द्दिनो बिभीय निलीनैर्जरठहलाहलैरिवाधिष्ठितया, रविकरकतकक्षोदप्रसादितजगद्गोलकलशावकाशसलिलमलपङ्कैरिव कलिलया परिखया परिक्षिप्तम्, नारायणनाभिविवर्त्तवेष्टनया परिगतमिव ब्रह्मसदनपुण्डरीकम्, टङ्कतष्टखण्डचितम्, त्वष्टृतर्कुनिर्मृष्टमार्त्तण्डमयमपरमिव पुञ्जितं दिक्चक्रमजस्रं प्रविश्य निर्गच्छन्तीभिरुडुभिः कपोतिकाभिरिव कल्माषविटङ्कम्, अनेकगव्यूतिविततम्, अष्टव्यामपरिमितचितिव्यासम्, अभिनवप्ररोहपेलवपर्वतपक्षच्छेदसगर्वजम्भारिदम्भोलिदम्भच्छिदुरद्रढिमानम्, अच्युतभुजपाशबन्धमिवान्तर्न्नियमितलक्ष्मीसर्वाङ्गम्, अनङ्गारिजटामण्डलमिव निष्कलङ्कस्य कदाप्यनपचितस्य राज्ञः पादोपजीवनेनोज्ज्वलभुजङ्गवर्गम्, मध्याह्नमिव नक्षत्रलोकतेजसा विहीनं प्राकारमपश्यम् । अस्य वासरसहस्रदुर्लङ्घतया गोपुरमार्गेणान्तः प्राविशम् ।

अथ मन्दरमथ्यमानदुग्धोदधिकल्लोलधवलेषु, दशकन्धरभुजव्रजयन्त्रपीडनोत्खातमूलकैलासशिखरतुङ्गेषु, वैजयन्तमूर्द्धबद्धवैजयन्तीस्फुरणावलोकनकुतूहलाधोमुखनागरलोकेषु, वातायनविवरविनिर्गत्वरागुरुधूपधाराभिरभिवर्द्धितमांसलैर्विचित्रमणिप्रभेन्द्रचापनित्यलाञ्छितैर्बलाहकैरुपासितनागदन्तेषु नागदन्तच्छेदोपपादितनिर्यूहपर्यवस्थानसुस्थमन्मथोन्माथमत्तमिथुनेषु, विपणिवीथिसौधेषु जालविन्यस्तवदनया कयापि कटाक्षक्षेपमधुकरमयशृङ्खलया निबध्याकृष्टः, कयाचिदमृतरसनिस्य (न्य) न्दमधुरेण स्मितेन स्नपितः, [illegible] कुसुमरस-

लम्पटो गण्डयोरनुपतन्विधुतमूर्द्धतरलमणिकिरणदण्डेनाभिहत्यान्यतो नीतः, अन्यया वदनसाम्मुख्यवैमुख्यसंकुचितविकचे लीलाकमले निवेश्य क्रीडनकीकृतः, अपरया मरकतप्रतिसरनिलीनो न परिचितः, अन्यतमया मृगमदपङ्कप्रत्युप्तचरणो गन्तुमपारयन्नुपहसिततरलकरतलताललितविलासपेशलं प्रत्यभिज्ञाय मोचितः, एकतरया कर्पूरधूलिधोरणिविवर्णः कालीयकरसेन क्षालितः, एकया भवनोपवनमाधवीमकरन्दबिन्दुना करकनिष्ठाग्रावलेहितेन तर्पितः, परया प्रीतिप्रसन्नया दृष्टचा करे गृहीत्वा भ्रमर! (भ्र)म यथेच्छसीति विर्सजितः, गीर्वाणग्रामटीदुर्लभैरवितृप्तसहस्राक्षप्रेक्षणीयैर्नगरलक्ष्मीविलासैराक्षिप्तलोचनः, कथं कथमपि पदं पदमग्रतो गच्छन्नवनिंगवीदोहदक्षपृथुचापकोटिघट्टनोत्खातमूलव्यस्तावस्थितैरिव गिरिभिः, अम्बुभरेण गगनमार्गान्निपत्य गामवलम्ब्योत्थितैरिव बलाहकैः, कामपालहलहतिपर्यस्तकालिन्दीस्रोतोभिरिवोद्र्ध्ववर्द्धमानैः, चरणदण्डपातभुग्नदानद्रवपरिपूरितधरणिसरणिभिः, पुष्कराग्रपीतोन्मुक्तप्रवहवातदण्डाभिघातभीतवैमानिकैः, विधुतमूर्द्धमण्डलितशुण्डारदण्डाच(ग्र)कृष्टरविरथप्रधिभिः, आधोरणशिक्षानियमितैः, मेरुवप्रदारणलग्नहिरण्मयमृल्लाञ्छिताग्रज्योत्स्नावदातदन्तमुसलैः, दन्तावलैरनवकाशाजिरपर्यन्तम्, अर्यमरथादिव भ्रष्टैर्वरुणलोकादिवोद्गतैर्मघोनेवोपायनीकृतैरश्वरत्नैर्निरन्तरासन्नचत्वरमास्थानम्, तत्र च निवातनिक(ष्क)म्पानिवार्णवान्, अवनिवहननिःस्पन्दा(निव)दिग्गजान्, उपसंहृतज्वलितहेतितारल्यानिव वीतिहोत्रान्, असकृदवभृथाभिषेकपूतशिरसः, मुहुररातिकन्धराबन्धसञ्चारितमण्डलाग्रान्, अखिलदण्डनीतिविदः, विदिततदात्वायतिविभागान्, अनुपधिधर्म्मकतानबुद्धीन्, उपधाविशुद्धान्, समाजक्रमेणावस्थितानमरानिव सुधर्म्माध्यासिनो जनानपश्यम्।

मध्ये तु महतो जनसमाजस्य स्थिरावस्थानम्, अर्थिमनोरथातिवृत्तविभवम्, अभिनवप्रभावैभवव्याप्तदिगवकाशं कमपि कामदुहां प्रवरं व्यलोकयम्। ततस्तत्कालोद्भूतविस्मयापेतविवेकोऽहम्—स एष भगवान् पारिजातो दिष्टचा मया दृष्टः। नहि कश्चिदन्यश्चतुर्दशलोकलक्ष्मीनिवासभवनमप्रार्थितोपनीतमर्थिने मनोरथाधिकं प्रयच्छति। न चान्यस्य च्छायामाश्रित्य वर्त्तन्ते विबुधाः। न चान्यत्र सुमनसामीदृशं सौरभ्यम्। कस्मै वा स्पृहयतीतरस्मै पुरन्दरलक्ष्मीलास्यरङ्गस्थलाय सुरभिकौस्तुभप्रभृतिर्वदान्यवर्ग इति नमोऽस्तु ते। नूनमसि पारिजात इत्यभिध्यायन्निमिषादयोजिषि चेतनया। लब्धा(ब्ध्वा)प्रतिसंधिमुदभावयम्—अहो मम मोहः, क्व तज्जरद्विपिनं नन्दनं नाम, क्व चेदं त्रैलोक्यसारभूतं श्रीनगरम्? क्व स दारुमयशरीरो देवानेव केवलं कामेन वर्द्धयन्ननेकधोत्खातमूलः कल्पतरुः, क्व पुनरयमाश्विनेयरूपगर्वसर्वङ्कषलावण्यसम्पद् उर्वशीप्राणेशपुरूरवःप्रतिमल्लो देवर्षिपितृमनुष्याणां परमं परायणम् अनन्यसाधारणस्थामा कोऽपि पुरुषः? न च रसनावलेह्यः स्त्रीप्रकृतीनां

सुमनसामयं मकरन्दः, परन्तु पुंप्रकृतीनां श्रवणपेयवाङ्मयामृतम् । अतो जानामि स एष मर्त्यपतिः फतेपतिसाहो वसुन्धराविबुधैः प्रशस्तिशतेन स्तूयते । तथा हि–

सुधर्म्मामिध्यमध्यासीनस्य भगवतो महेन्द्रस्य कर्णकल्पितपारिजातमञ्जरीगर्भे निलीयावस्थितो बालकुतुकतरलकुमारजयन्तानुयोगनियोजितेन गिरामीश्वरेण अङ्गिरस्तपस्तरुफलेन गीर्वाणवर्गवन्दितचरणेन गुरुणा प्रस्तूयमानासु विचित्रासु त्रैलोक्यकथासु श्रुतवानस्मि यदिदानीममरलोकं पुरन्दरः, पातालमनन्तः, मेदिनीं मेदिनीपतिसाहसुतः फतेपपतिसाहः प्रशास्तीति ।

किमन्यथा विकल्पितेन । स एष सोमान्वयसंभवो महात्मा गढपरिवृढः । येन राजन्वती वसुमत्युपहसति गोतमकोपमार्गणव्रणसहस्रविकृतकलेवरेण आङ्गिरसधर्म्मदारधर्षणच्युतधर्म्मेण पुरन्दरेण सनाथमुपरिलोकम्, यस्माच्च वसुन्धरावलयधुरन्धरादितरदुरारोहात्तुङ्गात्मनां प्रथमात् कुलाचलसानोरिवोत्थिता कीर्त्तिमहानदी केन महता गभीराशयेन सागरेणेव न संगच्छते । किमपरम्, उज्ज्वलात्मनामग्रगणनीया मूर्त्तिमतीव करुणा रिपोरपि वर्त्म दर्शयन्ती दिगन्तभ्रमणसहचरी भवति । मार्तण्डमण्डलान्तर्विवरे निलीयमानानां रणावनावुज्झितजीवितानामरातीनां प्रतिदर्शसंक्रान्तसोममण्डलकलाच्छलेन प्रविश्य प्रवर्त्तयति प्रदीपप्रयोजनम्, येन सम्परायसीमनि मण्डलाग्रधारापयःपुण्यतीर्थे मज्जितैरुत्पत्य दिवं प्रज (य) द्भिः, सुरतसामरस्यभङ्गकुपितपार्वतीशापवन्ध्यसुरवधूकृतकतनयैः, नाककुलटालम्पटैरभिनवदैवतैः संबाधमासते सुधर्म्मायामनिमिषाः। पञ्चकुलभूभृतामधिपतिमाश्रित्य प्रवर्तमानाः, कतिचन कनकवर्षदुर्दिने तिलपटलनीलपटावगुण्ठना वसूत्सर्गसलिलसंभृताः, काश्चन सिन्दूरसान्द्ररागकुम्भबहलकुञ्जरबलाहकावलीवलयिनि सम्परायसंध्यासमये महारजनरञ्जितनिवसना इव शोणितोदाः, कतिचिदतिधवलयशोजालज्योत्स्नोज्ज्वलेन गतिधवलाम्बरा इव वीताञ्जनवैरिवरवर्णिनीनयनवारिमयपूराः, सकलसिन्धुनाथमर्णवमभिसरन्ति सोत्कलिकाः सरितः । यस्य च रिपुर्न्न केवलं चरणाभ्यामेव यावदतिसौसादृश्येनापि जलधिं विलङ्घते । तथा ह्यस्य श्रीनगरपतेररातिः परपुरुषपरिगृहीतलक्ष्मीरुद्धृतसर्वरत्नो निस्सारेणात्मना (न) केवलमवतिष्ठते, किं पुनरागस्त्यागोपनीतजलभावोऽन्तर्गर्भितहुताशनदग्धोदरो दारोपनीतेन जीवनेन वर्त्तते कुक्षिम्भरिः, सदा यादोऽध्युषितवनगर्भो न केनापि विश्रम्भनिर्भरेणोपास्यते । जानाम्यवन्ध्यो मे व्यवसायः, प्राप्तं मया जीवनसाफल्यम्, आसादितो नयनमहोत्सव इति चिन्तयित्वा रसनावलेह्यमतिमात्रोपभोगविरसं कुसुममधु विहाय, श्रवणपेयं प्रतिपदस्वादुनि कोविदवाङ्मयामृते सतृष्णः, कृष्णमणिसोपानपरम्पराकिरणान्धकारवर्त्मना गच्छन्नर्ककन्याप्रवाहापवाहितेन्दीवरदलपुट इव केनाप्यलक्षितगतिः,

चामरग्राहिणीकर्णपूरतापिच्छकुसुमगुच्छे मृगमदपङ्क इवाञ्जनगुडकः, सुचिरमपरिचितः परैरतिष्ठम् ।

तथा तिष्ठति मयि तत्र तस्य गढपरिवृढस्य वामावकाशोपकल्पितकार्त्तस्वरासननिषण्णेन, सिन्दूरपङ्कलेपगौरगजगण्डपीठाक्रमणविक्रान्तकेसरिकिशोरश्रियमधिश्रयता, अनतिचिरोद्गतदशनकोरकप्रकरसुभगाननेन, कुमुदकुसुमार्चितचन्द्रोदयललितोदयाद्रिसुन्दरेण, कपिलकुन्तलाग्रवलयितगोरोचनातिलकमुग्धललाटतटेन, सान्ध्यरागपाटलकिरणपटलप्रोतरोहिणीसङ्गमसनाथोत्सङ्गशशिखण्डमण्डितगगनैकदेशानुकारिणा, लोकत्रयातिवर्त्तिसत्त्वप्रकर्षविडम्बितकपटवामनकैटभारिणा, मणिकिरीटतटावलम्बितालकलताप्रबन्धलाञ्छितकपोलेन, प्रभाविभाकरप्रसूयमानयमुनाप्रस्रवे सनाथसानुशिलातलेनेव कलिन्दगिरिणा युवराजनरेन्द्रसिंहेन कुमारगोपालसिंहेन च वद्ध्वा करकिसलयाञ्जलिम् आदाय प्रभोर्भ्रूभङ्गसूचितामभ्यनुज्ञामभ्यधायि—धरावल्लभदक्षिणभागविस्तृतमांसलकुत (शम) यासनाध्यासीनानाम्, आम्नायरहस्यविदाम्, अष्टादशविद्यास्थानकोविदानाम्, आजन्मसंचितब्रह्मवर्चसानाम्,अवध्य (न्ध्य) वचसाम्, ऋणत्रयमेषणात्रयं चोन्मुच्य परापरब्रह्मणी परं परिचित्तयताम्, अतिगहनसंशयग्रन्थिच्छिदुराणाम्, अपहाय त्रिवर्गमपवर्ग एव प्रसक्तानाम्, आत्मानमनात्मानं च जानतां द्विजानामेकतमो भवन् ! उपाध्याय ! माध्यन्दिनमूर्द्धन्योऽसि ! वैदेहस्य ब्रह्मविदो विद्यानिधेः पीताम्बरस्य सुचरितार्णवपूर्णचन्द्रो भवसि! भवसिन्धुपोतभूते भगवति भवानीपतौ परमार्थसति वस्तुनि प्रीयसे । न तथा विषयेषु सज्यसे । जानासि समासं व्यासं प्रसादमोजश्च गिरां प्रबन्धस्य ।

गुरो गोकुलनाथ ! भवानग्राहयदावाभ्यामखिलमाम्नायसम्प्रदायम्, अशिक्षयच्च स्थानकरणस्वरान्, अकल्पयदावयोरध्वरतन्त्रविज्ञानम्, व्याकरोत्प्रकृतिप्रत्ययवर्णपदसमवायविभागविकारसंस्कारैर्वाक्यादर्थस्फोटम्,निरब्रवीच्छब्दार्थयोरौत्पत्तिकं योगम्, अच्छन्दयदावामलौकिकलोकायतच्छन्दोराशिद्वयविज्ञानवरेण, ज्योतिषश्चक्रमवनिगोलं ग्रहाणामनेकविधा गतीः सन्निकर्षविप्रकर्षौ चादर्शयत्, सर्वविधिभिरभिधेयमविधेयमितरेषां प्रमाणानाम्, निगमसारभूतं किमपि वस्तुधर्मं भवदुपदेशादमीमांसावहि, त्रयीतत्त्वगोपनचणेन कथात्रयेणानयाव दण्डं प्रतिपक्षान्, अस्मराव विधिव्यासेधविषयम्, अवाधारयाव पुराणराजर्षिचरितानि, प्राभवाव परीक्षितुमायुरायुधानि तौर्यत्रिकं नृपव्यवहारं भरततन्त्रं रूपकाण्युपरूपकाणि महत्सु काव्येषु रसरीतिगुणालङ्कारदोषान् ।

अस्मिन्नवसरे सरसकथाप्रबन्धस्याधिकुर्वहे, शुश्रूषति चेयमनुविधेयस्थेयकथकसंकुला जनतेत्यालपतोरेव तयोराक्षिप्य वचनमसौ ब्राह्मणो मूर्त्तिमानिव ज्ञानविज्ञानराशिराशीर्भिरभिवर्ध्य तौ कुमाराविदमकथयत्—वत्सौ ! विदित-

वेदितव्यौ युवां वयसि प्रथमे स्थितावपि विज्ञानवृद्धिविवर्धितमङ्गलौ प्रभवथो वादेन तत्त्वमनुसन्धातुम्, जल्पेन परान्निग्रहीतुम्, अतिचण्डवितण्डापाण्डित्येन सर्वनिर्वचनानि खण्डयितुम्, आसां तिसृणामान्वीक्षकीकथानां नास्त्यविषयो युवयोः, अयमेव च रसास्वादगुडजिह्विकयोपदेशं ग्राहयितुमवसरः। रोमकूपविवरवर्त्मना प्रसृतपरिवाहेण यौवनमदमोहयमुनापूरपयसा पूरिते हृदयह्रदे न लभतेऽवकाशमुपदेशामृतप्रवाहः प्रवेष्टुम्, रोमराजि-भुजगदंशप्रसर्पिकन्दर्पविषवेगदुःस्थिते हृदि परिणतितिक्तमपि मधुरायते, श्रवण-विवरासन्नभूमिनिम्नाभिमुखी युवदृष्टिपर्वतापगा प्रयत्नशतेनापि नोपरि परिवर्त्त-यितुं शक्यते, नीचान्नीचतरमभिधावति नवनवाभिलाषवेगविप्लुता न क्वचिन्नि-र्भरमवतिष्ठते, पूर्वपूर्वपरिहारेण क्षणे क्षणे परं परं विषयमभिसरति, यदि क्वचिदनुरागोद्घातप्रतिहता विलम्बते तदा महतीं भूमिमर्ज्जयित्वा वैकृतश-तान्यातनोति। तथा च तेन मध्यमेनाप्यतिजघन्येन कामसखेन वयसा श्मश्रूदयमिषादनुचिताचरणमसीलेपश्यामला क्रियते मानुषमुखश्रीः, यथा पलितसलिलधौतापि पापानुतापमलिनिमानं न त्यजति, किञ्च शैशव-दशोपशमशोककृशीयसो मध्यभागस्थावयवानादाय विस्तारिणि तरुणहृदये लब्धावकाशा विषमशरशरव्यधविवरवर्त्मना प्रविशन्ति विविधा विकाराः, यैः संबाधं सहवासमसहमानो विवेकवराकस्त्यजति तं देशम्, अपसरत्युपदेश-वाक्यार्थग्रहणसामर्थ्यम्, इत्थमनपेतपञ्चदशहायनो धर्मं ग्राहि(हयि)तव्य इत्यामनन्ति।

सेयमायुष्मतोर्ग्रहणाय काचिदन्यैव न्यायकथाभ्यस्तुरीया कथा प्रस्तूयते। तदुद्घाते प्रणमतं युवामाक्रान्तलोकत्रयं त्रिविक्रमम्, अथ व्यस्तवेदमभ्यस्तपरापरतत्त्वमायत्तवाग्दैवतमवश्यवचोवश्यार्थग्रामम वन्ध्य-कविं कृष्णद्वैपायनम्॥

इति श्रीगोकुलनाथसूक्तौ कथायां कथोद्घातो नाम प्रथममाख्यानकम्॥

## द्वितीयमाख्यानकम्

अथ निशामयतम्—काचिदमर्त्यकन्यका, पवनप्रेरिता, पुष्कराद् पृथिव्यां पतिता, पुष्करसरस्तरङ्गशीकरसम्पर्कशीतेन मूर्च्छामपहरता मारुतेन प्रतिपन्नचेतना, पुष्करारण्यपतितमात्मानमात्मनः प्रतिबिम्बमिवापरां दारिकां च विस्मयविषादहर्षसंभेदमुकुलितया प्रेमप्रवणया रूपैकपक्षपातिन्या दृशा ददर्श, अब्रवीच्च—वासु ! कासि, कस्यासि, केनासि विपिनमिदं प्रापिता ? कस्य हेतोस्तवैकवेणीधरमनत्युज्ज्वलनिवसनप्रसाधनतिरोहितलावण्यम्, अञ्जनमधुकरपरित्यक्तनयनपुण्डरीकम्, उज्झितस्मितकुसुमताम्यदधर-किसलयम्, अलकलतावेल्लनविलुलितालिकफलकाकुलमुखमृगाङ्कम्, अत्यायत-दृगन्तकुवलयमात्राभरणश्रवणपाशम्, अनवरतरुदितनिपतदश्रुबिन्दुमौक्तिकै-कावल्येकभूषितस्तनपरिसरम्, अतिधवललवलीवल्लिपाण्डिमविडम्बनमिदं वपुः, केन कारणेनैकाकिनी हिंस्रसत्त्वभीषणामिमामटवीमधिवसन्ती व्यालवलय-बद्धधूर्ज्जटिजटातटावलम्बिनीमिन्दुकलामनुहरसि ? कस्मै निमित्ताय नवे वयसि विहाय विषयान् मुनिरिव तपस्यसि ? न यदि रहस्यमिदम्, तदा-ऽऽवेदयतु भवती वृत्तमित्यभिधाय तूष्णीम्भूतायां तस्यामपरा कुमारिका दीर्घमुष्णं निःश्वस्य मन्युवेगस्फुरिताधरमवादीत्—

दर्शनात्प्रभृति प्ररूढनिर्भरप्रणयं प्रियसहचरीभावमवलम्बते त्वयि मम मनः, निवेदयाम्यात्मनो वृत्तम्, अवधानप्रदानेनानुगृह्णातु मां प्रियसखी। प्रायशः प्रियसख्यापि श्रुत एव स्याद्विबुधवार्द्धकिर्विश्वकर्म्मा, यमाश्रित्य मयमायामहार्णवमुत्तरति सुरासुरसमरमल्लः शुनासीरः, यत्र नवनव-निर्माणनिपुणे प्राणाधिकप्रणयिनि प्रणप्तरि न्यस्य भारमभ्यस्यति त्रयी-पारायणमेष नारायणनाभिनलिनगर्भो हिरण्यगर्भः, येन नासत्यजननी-जीवितेश्वरे शाणकषणजर्जरज्योतिषि जामातरि मार्तण्डे सकललोचन-सुभगमुदपादि मण्डललावण्यम्, यस्य वास्तुसूत्रकारस्य तन्त्रमुपजीवन्ति तक्षाणः, तस्य भगवतः वासवप्रियसखस्य वासवस्य त्वष्टुरात्मजाऽहमुदाहरण-मभागधेयानाम्, आयतनमपुण्यानाम्, निदर्शनममङ्गलानामस्मि चित्राङ्गदा नाम।

साहमेकदा पुरोडाशभागमवलेढुमाहूतेषु महामुनिना शौनकेन, व्रजत्सु नैमिषमनिमिषेषु, मध्यमलोकावलोकनकुतूहलिनी प्रथमावतीर्णमाखण्डलम-नुव्रजता तातेन सह मेरोरवातरम्, न प्रमाणमकरवं वारयन्तीं मातरम्। अनतिप्रीतेनापि पित्राऽपत्यवात्सल्यपरवशेनाहमनुव्रजन्ती न वारिता, केवलमाजन्मनो बद्धसौहृदाभ्यां सहचरीभ्यां मन्दारिकामन्दोदरीभ्यामनुग-म्यमाना न्यवेशिषि स्ववाहनविमानैकदेशे।

ततः प्रतिष्ठमाने विमाने पितुः पृष्ठदेशनिषण्णाऽहम् अन्धतमसा विकल-परभागेन मिहिरमण्डलालोकभास्वरार्द्धेन लोकालोकेनेन्द्रनीलमणिवयघटितैकैकतटेन प्राकारेणेव परितः परिक्षिप्ताम्, अनेकविधवर्णैः,अतिविप्रकर्षादविरलैरिव: विलोक्यमानैः, आहितकनकाच(ल)लाव(ण्य)दीप्रगर्भैःसप्तभिरर्णववेलामण्डलैः परिगतां सप्तपदीवलयवलितामिव भुवनश्रीविवाहवेदिम्, अभ्यर्णलवणार्णववेलाचक्रवालपर्यवष्टम्भेन पतदापगाप्रवाहमौक्तिकप्रतिसरचुम्बितकुलाचलकुचेन जम्बूद्वीपेनोच्छ्वसितहृदयां नारायणबाहुबन्धवेष्टितवक्षसमिव लक्ष्मीम्, अम्बुनिधिसलिलावर्तपर्यन्तदीर्घेण पुण्यसरित्स्रोतस्सहस्रबलिभङ्गभङ्गुरेण मेखलाविलम्बिपयोधरोपरुद्धोभयपार्श्वेन तुषारगिरिसानुनोल्लिखितमध्याम्, आनाभिलम्बपलितधवलरोमराजितोदरीमिव जरतीम्, अवनिनाथपृथुचापकोटिसमुत्सारितग्राववर्गसमीकृते विन्ध्यहिमवदन्तरद्रोणिदेशे विचित्रखेटखर्वटपुटभेदनग्रामरमणीयाम्, प्रसाधिकाकरनिरस्तग्रैवेयलम्बमणिदामनि कुचयोरन्तरालसीमनि ; लिखितपत्रभङ्गिमिव वासकसज्जाम्, चित्रपुत्रिकामिव नानावर्णसंकीर्णामचलां च, प्रावृडापगामिव निबिडरजोमयीम् उद्वेल्लत्सलिलमग्नभूयिष्टसकलद्वीपां च, मुडतनुमिव सदा हिमालयालङ्कृताम् अनेकनागधारणस्थिरां च, महिषीमिव राजभोग्येन वपुषा शेषभोगनिषण्णाम्, समासप्रक्रियामिव बहुव्रीहिभिराढ्याम्, देवतामिव भूतेषु प्रथमगणनीयाम्, जङ्गमैरजङ्गमैश्च भूभृद्भिरतिप्रयत्नेन ध्रियमाणाम्, अतिशयितभूतिमत्तया समुचितां प्रमथनाथस्य प्रथममूर्त्तिम्, वृषप्रसवभूमितया युज्यमानगोव्यपदेशाम्, अशेषबीजप्रकृतिं भगवतीं भूतधात्रीमपश्यम् ।

यथा यथा (च) विमानमवनिगोलाभिमुखमवननाम, तथा तथा गगनमुन्ननाम, संचुकोच ककुभां चक्रवालम्, प्रससारं नव्य(मध्य)मं भुवनम्, तिरोबभूव भुवः प्रान्तपरिधिः, आवि(र्बभू)व चोच्चावचो विभागः, क्रमेण च यथासचि(न्नि)कर्षविभक्तव्यक्तसर्वावयवां वसुमतीमवतीर्णे विमानप्रवरे पश्चिमोत्तरेण सूताश्रमात्, अनुगोमतीसरस्वतीसंभेदम्, अधिनैमिषमवतीर्य यज्ञवाटमविशन्मम पिता । मया पुनरननुभूतपूर्वविषयावलोकनकुतूहलाकृष्टया सह सहचरीभ्यां प्रत्यपद्यत काञ्चना नाम सरस्वती ।

तत्र पुलिनसिकतापांशुक्रीडितेन, तीरतरलकलहंसमिथुनचरणसंयमनप्रयोजनेन, नूतननलिनीमृणाललतोन्मूलनेन, दरदलदरविन्दमकरन्दलोमभ्रमद्भ्रमरनिकुरम्बान्धकारभीतिव्यथितरथाङ्गयुगलसंयोजनव्यसनेन, निजस्याननस्य नयनस्य च प्रतिबिम्बेषु पुण्डरीकमतदिन्दीवरमेतदिति भ्रमात् करकिसलयव्यापारणेन, कुचकुम्भास्फालनजर्जरिततरङ्गेण, जलावगाहनेन च महान्तमपि समयमेकमिव क्षणमक्षपयम् ।

अथ गगनमध्यमध्यारोहति हरितहयस्य भगवतस्त्रयीमयतेजसस्तपनस्य ललाटन्तपे त्वष्टृतर्कुटङ्कत्रुटिततेजस्त्रुटिभिरिव मध्यन्दिनसान्ध्यविधिविधेयमाध्यन्दिनाघबिन्दुभिरुत्तम्भितबले निर्निमेषनलिनीनिरीक्षितलवणिमनि मण्डले, वनमहिषविषाणदण्डताडनतरलवीचिनिचयचलितसरसिरुहापसरद्भ्रमरविसरे सरस्वतीस्रोतसि, करिकरनलकपीतोज्झितपरागवासितपयोगण्डूषसेकशीतले तटिनीतटतरुकदम्बच्छाये, बद्धकदम्बकेषु रोमन्थमन्थफेनधवलमन्थरप्रोथेषु निमीलितोन्मीलितनिद्राकषायने (त्रे) षु पुण्याश्रमहरिणेषु, कदाचिदननुभूतपूर्वेणाघोमुखमार्त्तण्डघृणिघर्मेण ताम्यन्ती वटविटपिनो मूलमाश्रित्य न्यषीदम् । अमुष्य वनस्पतिपतेरविरलदलच्छन्नदिगन्तचुम्बिविततशाखस्य परस्परप्रोतप्ररोहपटलान्तरालवातायनविवरविवर्त्तिना किसलयव्रजव्यजनवातेन वीतक्ल(मा) सर्वकालहरितहरिताप्रतानतल्पे मुहूर्त्तमेकतरसहचरीबाहुमूलविन्यस्तवलितकन्धरेणाननेन नयने न्यमीलयम् । अनन्तरं तस्यैव तरोरपरत्र प्रदेशे प्रारोहवरत्राव्रततिव्रातबद्धयुग्यवाजिनो रथादवतीर्णस्य पुंसो मत्तशारदकलहंसनिर्घोषगम्भीरघर्घरामम्भोधरध्वनिभ्रमचकितबर्हिणप्रथमाकर्णितां गिरं कर्णातिथिमकार्षम्—

आर्य युगन्धर ! गच्छ मुनेराश्रमम्, विश्रामय तुरङ्गान्, अभिवादयिष्यसे मद्वचसा भगवन्तं शौनकम्, अन्यानपि तपोविज्ञानवयोवृद्धान्, परिरभ्यानुयोक्तव्यस्त्वया कुशलमाजन्मनो मम मित्रं शतक्रतुः, आवेदयिष्यसि मामाश्रमाभ्यासपादपच्छायामधः श्रमापनयनायाश्रयन्तमायुधद्वितीयमध्वरप्रत्यूहकारिसत्त्वनिग्राहिणमागतमतिथिम्, अभयेन योजयिष्यसि हविर्भागभुज इति ।

तेन च त्वरितप्रस्थितसूताधिष्ठितस्यन्दनस्यदतरलप्रधिध्वनिकपटादनुरणितेन वचसा श्रवणविवरवर्त्मना प्रविश्य हृदयमपहरता प्रबुद्धा कस्यायममृतनिस्यन्दमधुरो ध्वनिरिति निरूपयन्ती तमुद्देशमागत्य माणिक्यमुकुटनिह्नुतकुन्तलकलापललिताननलिनम्, आपीततिमिरपूरितोदरप्रत्यूषमिहिरमण्डलाभिमण्डितमुखमिव वासरम्, अचिरप्ररूढकूर्चकचनिचयचुम्बितकपोलचिबुकम्, उच्चरच्चञ्चरीकचक्रपरिवृतपरभागमुग्धसरसिजमिव सरोवरम्, आयतश्रवणशष्कुलीशृङ्खलितमकरकुण्डलम्, अतिशयितरूपसंपदवजितकन्दर्पकेतनमिव पाशेन नियमयन्तम्, उत्तम्भितायतललाटतटया सहजविभङ्गिसुभगया भ्रूलतया संहितार्द्धचन्द्रशरसुन्दरस्मरशरासनलीलामुपदर्शयन्तम्, अशेषसरस्वतीपूरपरिपूरितश्रवणसरःपरीवाहाक्रमणादिव रक्तत्रिभागेन धौतराजपट्टम्, मसृणतारकेण चक्षुषा विद्रुमलताकिर्म्मीरपरभागस्य नारायणशयनलीलासनाथस्य दुग्धोदधिकल्लोलस्य धवलिमानमनुहरन्तम्, उन्निद्रतिलप्रसूनोपहासिनासिकावंशम्, अवदातदशनप्रभापिहिताधररुचकसुभगस्मितम्, अवश्याय-

पटलान्तरितधातुधारमिव धराधरम्, अतिमुक्तकुड्मलस्थूलमुक्ताफलप्रतिसर-परिगतग्रीवम्, उच्छ्वसितक्षीरधारापरिक्षिप्तकम्बुबिम्बाधिगतमिव मङ्गलकलशम्, अवनिवहिङ्गिकाभारवहनोच्चूनांसदेशेन बाहुयुगलेन भुजगराजभोगपरिणाह-मुपहसन्तम्, अखिललोकलक्ष्मीनिवासनिष्पेषविततवक्षसम्, उन्मदगन्धसिन्धुर-कटकटाहतटपाटनप्रसारितायतसिंहावलग्नानुकारिमध्यकृशिमानम्, ऐरावण-करमूलपीवराभ्यामरिवर्गविजयकुञ्जरालानस्तम्भाभ्यामूरुदण्डाभ्यामाक्रम्य धरणि-मवनमयन्तम्, अनेकसामन्तकुन्तलप्रतिबिम्बलाञ्छितनखमृगाङ्कलेखेन वैरि-लक्ष्मीसीमन्तयन्त्रणचिह्नपद्धतिमिवोर्द्ध्वरेखामनुबिभ्रता कुलिशायुधपाणिपीठपीडन-प्राप्तवज्रलक्ष्मणा पद्मलक्षणानुमितपद्माकरसंवाहनेन राजचक्राक्रमणसूचकचक्राङ्केन चक्रवर्त्तिसंपल्लीलाकमलसुभगेन चरणराजहंसमिथुनेनावगाढलावण्यनदीविवर्त्तम्, उपहसितनासत्यम्, अपलपितपुरूरवोगर्वम्, अवधीरितसुपर्वसार्वभौमविभवम्, अभिनवप्रभापटलपेलवावयवम्, शरदृतुमिव राजहंसधवलाम्बरम्, आकाशमिव नक्षत्रैराक्रमणीयम्, ईशानमिव भूतिभूषिततया रतिपतिरूपगर्वशातनेन भुजङ्ग-कुलसेवितया राजकलया च रोचमानम्, आनन्दमिव सकललोकप्रियम्, अर्क-बिम्बमिव प्रतिदिनमुदयमारोहन्तम् आशापरिपूरणसमर्थपादं च, वसन्तसमयमिव सर्वेषु भूभृतां मूर्द्धसु पल्लवितपादपरागम्, इन्दुमिव मृदुना करेण रञ्जितजगतम्, सागरमिव महिमलवणिम्नोराकरं कमपि युवानमद्राक्षम् ।

आसीच्च मम मनसि धिगिमामदीर्घदर्शितां विधेः । असौ हि कालत्रयदर्शी भगवान् प्रथममपि ददर्शैव यदीदृशमुत्पादयिष्यामि रूपराशिमिति, तदा किमिति लोकोपहासाय केवलमुदपादयदनङ्गम्, उत्पादितो वा केन हेतुनाऽमुना नीलकण्ठ-लोचनार्चिषि प्रक्षिप्य विशोधितो वराक इति चिन्तयन्तीमेव माम्—आकस्मिकः, न गरुभिरुपदिष्टः, न सहचरीभिरपि (भि) हितः, न मात्रा सन्दिष्टः, न पित्रोपन्यस्तः, न बन्धुभिरुद्रा (द्भा) वितः,न गान्धर्वेषु शिक्षितः, न कलाशास्त्रेषु श्रुतः,न दण्डनीतौ पठितः, न गगनान्निपत्य न पातालादुत्पत्य न दिग्भ्यः प्रसृत्य परापतन्नवलोकितः, न लोकतन्त्रे व्यवहृतः, न कदापि कुत्राप्यनुभूतः, न वेद्मि केन वर्त्मना हृदयं प्रविष्टः, न जानामि कस्मात् प्रतीकादुत्पन्नः, नावबुद्ध्ये किमङ्गमवलम्ब्य स्थितः, महान् प्रथमो विकारः परवशामकरोत् ।

येन ग्रहगृहीतेव, पिशाचाविष्टेव, (वि) नायकोपसृष्टेव, प्रमादपराभूतेव, उन्मादमोहितेव, काऽस्मि, किं व्यवस्यामि, केनानीय (ये), कस्मै स्पृहयामि, कस्माद्विषीदामि, कस्य भवामि, कुत्र गच्छामीति किमपि न प्रतिसमादधाम् ।

अथ तथा मम मनो मन्थति मान्मथकथानके, न केवलं जीवितमेव, किन्तु सकलस्य कुलकन्यकाजनस्य जीवितादप्यतिवल्लभं कौमारचारित्र्यमपि सहचरी-

संशयितमासीत् । तथा हि—मम सर्वाङ्गमालिलिङ्ग रणरणकः, मधुरमधरमधु निपीय कुचकलशावापीडयदायतो निःश्वासः, चुचुम्ब गण्डपालियुगलं पाण्डिमा, नीविबन्धमुदमोचयदूरुमूलमदोलयच्च वेपथुः, बभञ्ज कञ्चुकग्रन्थिदामानि पुलकः, न पदात्पदमपि गन्तुमदत्त स्तम्भः,विवेकमखिलमपाहरत् प्रलयः । सहचरि ! सुचिरमनुचिन्तयन्त्यपि न निश्चिनोमि किमिदं मदीयदग्धहृदयं तदा द्रवीभूय प्रतिप्रतीकस्रुतस्वेदसलिलच्छलेन विगलितम् ? उताश्रुबिन्दुसन्दोहवाहिना नयनमार्गेण निस्ससार ? किं नु प्राणेन्धनैधमानमदनमुर्मुरभसितभूतमुत्ससर्प वैवर्ण्यपाण्डिममिषेण सर्वावयवेषु ? किंस्विदनवरतनिपतदसमशरशरनिकरव्रणविवरवर्त्मभिरिव रोमकूपरनेकधा लब्धावकाशमुदञ्चितरोमसूचिमिषेण मोहानलदाहमलिनमपासरत् ? आहोस्विदावगवेगाग्रतश्वासवातदूरोत्सारितमनेकलम्बविस्तारिणि तस्य जनस्य लावण्यप्रभासरस्यनूढपूर्वेण गुरुणा विषादभारेण निर्भरनियन्त्रितं निममज्ज ? येन विकलाभिरन्तर्मुखीभिरस्मत्करणवृत्तिभिरन्विष्यमाणमपि नात्र दग्धशरीरे क्वचिदलम्भि ।

इयं च मे दृष्टिः पूर्वमेव कतिपयानि दिनान्यारम्य श्रुतिपथमुल्लङ्घ्य दूरमुत्सर्पिणी स्वैरं त्रिभागकोणेषु भूयसा विहरन्ती तथा मम वशे नाभूत्, विशेषतस्तदानीमापा(त)सुभगेन तस्य स्नेहजीवातोर्निजवंशप्रदीपस्य जनस्य प्रभापटलेन मोहिता पतङ्गीव सर्वात्मना तथा तत्र निपपात, यथा यथासन्निकर्षमुत्कर्षमावहता परितापेन प्रथममतप्यत, ततो मोहमसिमलिनिमानमभजत, अनन्तरमितो निर्गन्तुमपारयन्ती तत्रैवालीयत । किञ्च, प्रतिकूलनियतिपवनप्रेरणापवाहिता मम नयननौका लावण्यसलिलमहार्णवस्य तस्य सुभगस्य दुरवगाहगभीरविभ्रमावर्त्ते पतिता प्रयत्नशतेनापि नान्यतो नेतुमशक्यत, निर्मग्नभूयिष्ठा भ्रमिसहस्रमर्जयित्वा क्वचिदपवर्त्तिता क्वचिदुत्पतिता क्वाप्यधो वलिता कुत्राप्यवदलिता सुदुरधिगतमपि विषयमावृत्यावृत्य परामृशन्ती तदेकसादासीत् ।

प्रणयतन्त्रमर्मवेदिनी जानात्येव भवती, ईदृगनेकविषयाभिलाषवेशदासी कस्येयमभिविधेया भवति ? क एनां वशे प्रभवति स्थापयितुम् ? अविरलपक्ष्मकण्टकावरणान्तराले स्थापिताऽपि, तारकाकालायसटङ्ककीलितमूलापि, सततसन्निहितश्रवणपाशसंयमितापि, नासिकावंशदण्डपतनबिभीषितापि, नित्यमुपरि विस्फुरता कुटिलेन भ्रूकुठारेण तर्ज्जितापि, निमेषार्गलितपुटयुगकपाटान्तरितापि, ललाटभित्तेरधोविवरगर्भे प्रवेशितापि, त्रपाशृङ्खलितापि, गुरुभयस्थूलोपलयन्त्रितापि तरलतां न जहाति, यथाभिलाषमभिसरति विषयान्, अनुरागदास्यदूषिता किं करोतु परवशा, विषादहर्षभयेषु तुल्यमेव वारि वहति, सन्ध्येव मित्रव्यसनमपि न गणयति, अनुपदगामिनो जगदश्वङ्क(न्धङ्क)रणात्तमसो न बिभेति, अकाण्ड एव रागमर्जयित्वा विकसन्ती कोकनदकाननस्य श्रियमप-

हरति, परस्परव्यतिकरमासाद्य विवर्तमाना रजोविकारकलुषाभिर्भ्रमिभिरन-वलम्बे वर्त्मनि वीतसारलघुतरं तृणमिव वात्या, प्लवमिवापगा परिभ्रमयति, प्रकृतिरेवेयमस्या यदनुरागो नाम । कथमितरथाऽभिषेकसलिलधौतव पांशुपरिमर्ष-दूषिताऽपि, मैरेयमदप्रमदपूरितेव समासन्ननिद्रानिमीलनव्याधिदुःस्थितापि रज्यति, अभिमुखमापतति, प्रयसि वस्तुनीव द्विषत्यपि रागमेव प्रकटयति ।

सेयमयस्कुशीव बहुलोहविकारकुशलेन मध्यमवयसा स्निग्धकुटिलदीर्घतीक्ष्णी-करणे पानकर्मणि संस्क्रियमाणा मलयवातध्मातस्य हरनयनहुताशनाङ्गारस्य पुट-पाकेन संक्रामितमिव रागमावहति, तमेवावसरे समुद्गिरति, तथाविधा यमेव यमेव सुकुमारसरसं जनं स्पृशति तं तमनुरक्तं च दुरनुसन्धविश्लथप्रतीकं च मर्मव्यधव्यथितं च प्राणसशयापन्नं च कुरुते, यदि पुनरश्मसारकठोरप्रकृतिनापि संघटते, तथापि तत्र रक्तभावमुत्पादयितुमसमर्थापि क्षणं विस्फुरतो रणरणकविस्फुलिङ्गाननुत्थाप्य न विरमति । प्रियसखि ! सेयमेवंविधा कनीनिकाकपटेन प्रकटितमलिनाशया दुष्टा दृष्टिः कस्य परिचयं प्रमाणयति ?

पश्य तावदकाण्डोपनतचित्तवैशसविक्लवाया मम जन्मनः प्रभृति संचितं प्रणयमेकपद एव नागणयत्, सततसहवासप्रीतेषु तृणीकृत्याभिजातिम्, अनपेक्ष्य कुमारीजनव्रतम्, अनादृत्य दैवतकुलापवादभयम्, अभिभूय चारित्रभङ्गभीतिम्, अपास्योपहासत्रासम्, उदस्य व्यसनोपनिपातशङ्काम्, अवधीर्य धैर्यम्, अतिक्रम्य सहचरीपरिहाससाचिस्मितातङ्कम्, अभिजातैरलङ्घितपूर्वामुल्लङ्घ्य गोष्पदमिव त्रपासरितम्, उत्तीर्य बलाद्विवेकसागरम्, प्रत्यग्रोन्मज्जनादिवाविच्छिन्नधारेणाश्रु-सलिलेनार्द्रमूर्त्तिरस्मानपहाय तमेव सकललोकसुभगं जनं सिषेवे, न तु मामपि सस्मार मम दृष्टिः ।

तत्रेत्थमनवर्तमाने व्यतिकरे तस्य सर्वलोकसुभगस्य वपुषि गुणगणावन-द्धामिव, कन्दर्पशरकीलितामिव, रोमसूचिस्यूतामिव, लावण्यसरोमग्नामिव, बाहुविजयालानबद्धामिव, नाभिविवरावर्तभ्रम्यमाणामिव, वक्षस्तटकपाटान्त-रितामिव दृष्टिमतिमहता प्रयत्नेन ततः किञ्चिदुन्मोच्य सहचरीमुखे न्यवेशयम् ।

विदितमदभिप्राया तु प्रियसखी मन्दारिका तमखिललोकसुभगं जनमव-नतशिरोनियोजितैनैकपाणिना प्रणम्य न्यवेदयत्—महाभाग ! महेन्द्रप्रियसखस्य त्वष्टुरात्मजा शौनकाध्वराहूतेन पित्रा सहेदं नैमिषमागताऽस्मद्भर्तृदारिका चित्राङ्गदा विज्ञापयति—फलितो मम यादृच्छिकोऽपि मध्यमलोकाटनव्यवसायः, व्यपगतं विविधवस्तुदर्शनाभिलाषतारल्यमनयोर्नयनयोः, अभिवीक्षितोऽवधिः सुभगभावस्य, केवलमेवमभिलाषातिशायिलवणिमनिर्वर्णनकृतार्थेन प्रहर्षाञ्चित-दीर्घेण चक्षुषा लङ्घितायां सीमनि प्रतिवेशिसमुद्भिमत्सरिणी विस्मयविधुत-

मूर्द्धतरलताटङ्कमरकतप्रभापटलमलीमसमुखी मम श्रुतिरात्मानमवमन्यते। नूनमापन्नाभ्युपपत्तिधनाः साधवो भवन्ति, प्राणयतु वचनामृततपणप्रीणनेन निर्वेदमूर्च्छितामिमामकारणोपकारिणामुदाहरणमेष महाभागः। यदपि जानाति महान्तमेव वंशमारुह्य नृत्यत्येवंविधा लावण्यसम्पन्नटी, तत्रापि नामरेषु नासत्ययोस्तृतीयं स्पृशति, न नागेषु मातलिसुतापतेरितरत्र सज्यते, न मानुषेषु क्षत्रजातेरन्यत्र रज्यते, न क्षत्रेषु नक्षत्रनाथान्ववाये पुरुषगर्भवासदूषितवपुषि पुरूरवस्यपि तथा प्रत्यपद्यत सौहृदं कथमन्यमाश्रयेदिति। तथापि निसर्गतरलमिदमन्तःकरणमविदितविविदिषितभवदन्वयमिवोत्ताम्यति, न प्रगल्भते भास्करकुलवर्द्धनो भवानित्युल्लिखितुम्, जानामि नूनमियतो दिवसानस्थानपतितैरतिकोमलैरात्मनः पदैरापदीवावर्त्तत भगवती सरस्वती, सम्प्रति तु केनापि नामपदेन महाभागविषये निवेशितेनानुभवतु सुखासिकाम्। अये सुभग! भीषयति मामनेन भवदेकनायकां कामपि पुरीमपहाय दीर्घप्रवासव्यसनेन महाभागः।

इति मन्दारिकावचनसमनन्तरमेव तस्य सुभगस्य मल्लिदामेव धम्मिल्ले, पाटीरललाटिकेव ललाटतटे, कुसुमकर्णपूर इव श्रवणयोः, लवलीलतापुष्पपरागोद्धूननधवलपुष्पन्धयधोरणिमौर्वीबन्ध इव भ्रूवल्लिमदनधनुषि, प्रसूनस्तवक इवाधरपल्लवे, क्षीरधारेव कण्ठकम्बौ, पुण्डरीकतोरणमालेव तुङ्गकुचमङ्गलकलशयोः, अकाण्डपलितलेखेव लोमलेखायाम्, अपरिमान्तीव त्रसरेणुसोदरे क्शीयस्युदरे, सुचिरमावर्त्तमानेव नाभिमण्डले, चत्वरसमाज इव विस्तारिणि नितम्बे, मानससरस्तटस्फटिकशिलानिविष्टराजहंसव्रज इव लावण्यपरिवाहवाहिनि जघनफलके, कन्दर्पकुञ्जरालानस्तम्भकलधौतशृङ्खलेवोरुदण्डे, किमप्यभ्यर्थमानेव याचनभङ्गभयपाण्डुः, पादयोः पतन्ती मम वपुषि बभ्राम दृष्टिः, प्रतिरोमकूपविवरस्रुतस्वेदसलिलच्छलेन निजगाल हृदयदमः, मदनपाशबन्धपरवश इव न किमपि स्पन्दितुमक्षमत कायः, मोहान्धकारेणान्तरस्य मलिनमजनीत्यहृष्यन्त रोमाणि, श्रुतानां प्रसरमिव निवारयितुमरुद्ध कण्ठं गद्गदः, विस्मयवाताभिघातादिवावेपन्त सर्वावयवाः, स्वान्तादपसृत्य बहिरिव निरगाद् वैवर्ण्यपाण्डिमच्छलेन विवेकामृतम्, प्रससार सर्वत्र धूसरतारजः, केनाप्यदृष्टपर्यन्ते रागसागरे प्लवननिस्सहं ममज्ज पयसि लोचनम्, अनारतपतदनङ्गशरभीतेवापससार चेतना, न श्रुतेन, न वंशेन, न धीरतया, न विजयप्रवीणतया, न महाप्राणतया, न सत्येन, न त्यागेन, न मेधया, न धर्म्मबुद्ध्या, न विशुद्धेन चरितेन, न भूभारवहनक्षमेण सत्त्वेन, न तत्त्वदर्शनेन, न गुरूपासनेन, नोपहासभयेन, न स्वजनत्रासेन, न दमेन, न नियमेन, न सर्वंसहतया, न तपसा, पर्यवष्टम्भमभ्यपद्यत हृदयम्।

इत्थमपि कृच्छ्रेणावधाय मनः, अनुसन्धाय मन्दारिकावचसां भङ्गिलालित्यानि, तीव्रश्वासविस्फुरिताधरकिसलयो मन्दमवादीत्—मङ्गलमुखि ! किं न विदितमनया वशीकृतविश्वमनसा तव सख्या मुषितहृदयेन, किं मया वेदनीयम्। अथ तथापि प्रथमप्रणयानुयोगरसभङ्गभीतो विज्ञापयामि—प्रसीदतु स्वान्तमवधाय ते प्रियसखी। जानासि तावदस्य मन्वन्तरस्य प्रणेतारम्, अमरनिकरकोटीरकोटिमणिप्रभाप्रवाहान्तरालतरलचरणसरोरुहम्, एकमेदिनीपतिपर्युपासितपीठनिकटम्, अशेषत्रयीतन्त्रविज्ञानगुरुम्, भगवन्तं मनुं वैवस्वतं नाम। तस्य पुत्रेषु प्रथमस्तत्र भवानिक्ष्वाकुः, यस्य पतङ्गवंशोचितमपत्यं शकुनिः, यं च भगवान् वैवस्वतो मनुरयोध्यानगरमनुशाधीति न्ययोजयत्। द्वितीयो देवपतेः परममित्रं सुदेवः, योऽसौ मन्वन्तराधिपतिना पित्रा विदर्भामधिवसेति प्रसादेन सत्कृतः। तृतीयमिन्द्रातिशायिविभवमिन्द्रद्युम्नमधिगच्छ, यस्य शाकलेषु प्रतिष्ठाननगरे तातज्ञया प्रतिष्ठा।

तेषु मध्यमस्य वैवस्वतमनुवंशवर्द्धनस्य सुदेवस्य तनयमेनं जनमवयन्तु भवत्यः। मम पिता तु भार्गवदण्डनीतिवर्द्धितबलेन, प्रबलचतुरङ्गबलपादाभिघातदारितवसुन्धरासन्धिबन्धेन, गन्धसिन्धुरदन्तमुसलपातपा(टि)तामरावतीगोपुरकपाटेन, माद्यदैरावणदाननदशोषणवृषमिहिरकरानुकारिनाराचेषुवर्षणेन, वृषविषादसागरवर्द्धनताराबृषेण, वृषपर्वणा सह प्रवृत्ते पुरन्दरस्य समरे विध्वस्तापरदिक्पालकुलेन कालनेमिना मुसलपातपोथिते कालदण्डे निरायुधे वैरिवशमुपगच्छति निजपितुरग्रजन्मनि भगवति दण्डधरे, तस्य कुलगुराः परित्राणाय पुरतो भूत्वा परिवर्त्य तस्य दनुनन्दनस्य कृत्तसारथिवित्रस्ततुरगापवाहितं रथम्, अथ ब्रह्मवरावध्यतारकासुरशरव्रातानलेन्धनतामगात्। ततस्तृणमिव प्राणान् परित्यज्य परं लोकमुपगते पितरि प्रजाभिरमरेन्द्रेण चाहं विदर्भाराज्यऽभ्यषेचिषि। भगवान् पुरन्दरः पितुरप्यधिकमस्मिन् जने प्रीयते। पितरमिव मामपि मित्रपदेनानुगृह्णाति। सोऽहमस्मि मानवः सुदेवतनयो विदर्भाधिपतिः सुरथो नाम भगवता शौनकेनाध्वररक्षार्थं मित्रस्य शतक्रतोः सभाजनाय चाहूतो नैमिषमासादयम्।

अथ दशनपथमवतीर्णासु भवतीषु विलोचननलकवर्त्मना निपीय भवत्प्रियसखीलावण्यसीधुरसमुन्मदमिदमान्तरं करणमपजहाति प्रथमामुपा(दाय) कामपि विविधविकारभारमन्थरामवस्थामिति नास्ति संप(म्प्र)त्यन्ववायोचिता चिन्ता, न भवत्यभिजातेरनुरूपमीहितम्, न विद्यते राजलक्ष्म्याः प्रयोजनम्, न वर्त्तते श्रुतानुसारि शीलम्, न तिष्ठति पुरुषकारोपबृंहितो व्यवसायः, न कालमपक्षते मदनः, न धैर्यमवलम्बते मनः, न कारणमनुरुध्यते निर्वेदः, न प्रतिपद्यते कर्तव्यमन्तःकरणवृत्तिः, न वेद्मि किमिदम्, न जानामि कुत एतत्, न प्रतिसन्दधे क्व तत्, नावबुध्ये कस्यादः, येनेदृशीमुपहास्यां दशामुपनीतोऽस्मि। केवलमनिलवेल्लित-

प्रबलदावानलज्वालावलीढमिव, चलदलातलताशतालिङ्गितमिव, कल्पावसान-लेलिहाननीललोहितललाटलोचनक्ष्पीटयोनिपुटपाकपतितमिव, वासुकिभोगाभोग-वेष्टनभ्रमितमन्दरोन्मथितदुग्धोदगर्भोत्थितकालकूटकवलितमिव, मिहिरलोका-धिष्ठितमिव, वाडवोत्पत्तिविवरप्रविष्टमिवात्मानमवलोकयामि। नास्त्यस्य वैशसस्य प्रतिक्रिया, न पौरुषाणामयं विषयः, न शास्त्राणामेष गोचरः, न बुद्धेरसावध्यवसेयः, याचनपराङ्मुखी क्षत्रजातिः कथमर्हति भवतीः किमपि दुर्लभं वस्तु प्रार्थयितुम्। अतो व्रजत, तिष्ठत वा यथासुखम्। अनुभवतु नियतिविपाकमसौ मनुकुलकलङ्काय केवलमुत्पन्नः सुरथः।

इत्यभिधाय मौनमास्थिते तस्मिन् जने, तेन तस्य वचसा स्नेहमयेन हविषेव हव्यवाहनः, सुधारसावदातेन पूर्णचन्द्रोदयेनेव सागरः, रजःप्रसरकलुषेण वात्या-विवर्त्तेनेव चलदलपलाशकम्पः, रसमभिवर्द्धयता प्रतिस्रोतोनुसारिमारुतेनेव सरित्त-रङ्गः, तस्मिन्नेव क्षणे नितरामवर्द्धत मम मनसि मन्मथोन्माथः।

अथाहमपवार्य तस्माज्जनादक्रु(ब्रु)वम्, सख्यौ ! न तथा व्यथयति मामकाण्डकुपितकन्दर्पकाण्डपातक्षतमर्मसन्धिरात्मा, यथा विविधविकार-विडम्बितो जीवितानपेक्षव्यवसितोऽसौ महाभागः। कदाचिदनेनापहृतरूप-सम्पदनङ्गो मत्सरेण मङ्गलेतरां दशामेनमानयेत्। किमपरं जगदेव वीतसारम्, अवनिमण्डलमेव व्यपेतसौभगम्, आनन्दमेव निर्निदानम्, उत्साहमेव निराश्रयम्, आकारलवणिमानमेव निरालम्बम्, ओज एव निराधारम्, अखिललोकलोचनमेव निष्फलमयमपघृणो मन्मथः कदाचिदाचरेत्। न चेदमनुचितमस्य मम हतशरीरस्य कृते भवितुमर्हति, यदि भवत्यौ मन्येते स्वयं ग्राहयामि शरीरमिदमनेन सुभगेन जनेनेति विरते मम वचसि प्रणयकोपकुटिलभ्रूलतमित्थमनुशशास मन्दोदरी—साह-सिनि ! कस्तवाय(म)समञ्जसो व्यवसायः, नहि प्रतिपादितासि पित्रा, नानुज्ञातासि मात्रा, नाभ्युपेताऽसि भ्रात्रा, नानुमताऽसि बन्धुभिः, आत्मनैव केवलमतिप्रगल्भसे ! तदिदमयशस्यमस्वर्ग्यमनार्यजुष्टमलोकसंबद्धमनायतिसुरसमतिमात्रगर्हितं यन्नि-सर्गपरतन्त्राणां कुमारीणां स्वातन्त्र्यं नाम। तदेतदाम्नायरहस्यविज्ञानविशुद्ध-बुद्धिर्भगवान् बौधायनो निबबन्ध—मातापितृशुक्रशोणितसंभवमपत्यम्। अस्य दान-विक्रयादिषु मातापितरौ प्रभवत इति। धीरे! नावधारयसि धीरताम्? धर्मतत्त्वपण्डिते! पितरमवमन्यसे ? मितिमातृमेयतत्त्वज्ञे ! मातरं न प्रमाणयसि ? सर्वावदातचरिते ! कुलं मलिनयसि ? चारित्रभङ्गोपहासिनि ! बहुभिरुपहसिष्यसे, विरम तावदस्माद् व्यवसायात्, यावदावामावेदयावो भगवते नातिदूरवर्त्तिने तव तातायेति परिणतिसुरसमपि सखीजनवचनमवश्यमुमूर्षुरातुर इव भेषजम्, अभिनिवेश-पिशाचगृहीता नारोचयम्।

अत्रान्तरे तृणमिवावधीर्य धैर्यमिव जन्मनः प्रभृति संचितं सखीजन-सौहृदम्, हृदयेन परिभूय स्वजनबहुमानम्, अध्यवस्यन्त्यां मयि साहस-व्यवसायम्, आवर्जयत्स्विव स्वेदसलिलजलाञ्जलिं कुलीनतायै, मामपहाय प्रस्थातुमिवोत्थितेषु रोमसु, निरुध्य मां निवर्त्तयतीव स्तम्भे, ममात्मप्रति-पत्तिवचननिरोधनायेव गृहीतकण्ठे गद्गदे, सर्वाङ्गमालिङ्ग्य मम रागमपनयति पाण्डिमनि, नयनयोरुन्मार्गप्रसरणरजांसीव मे प्रक्षालयति प्रमदविषादयोस्तुल्य-वृत्तौ वशीकृताविर्भावसिद्धौ प्रसह्य कुतश्चिदाविर्भवत्यश्रुणि, विधिवञ्चिते ! किं विचारयसि ? अभिसर सुभगमेनमिति बलादिव मम समचारयच्चरणावूरुकम्पः, गुणविशेषदर्शनमुषिते ! किमद्यापि विकल्पयसि, यदि न स्वयं ग्राहयसि तनुमनेन तदा त्यजामि त्वामिति मां तत्याजेव चेतना, विवेकविकले ! यद्यनेन मिलितुं विलम्बसे तदा तिष्ठ, वयमेव पुरतः प्रयाम इत्यायतश्वासकैतवेन निरगुरिव मम प्राणाः, इत्येवं दशानां संकलनमावेदयितुमक्षमा संक्षिप्य कथयामि । मन्मथेन वा दैवेन वा प्रेरिता तं जनमनुसृत्य महाभाग ! सर्वाभिर्विधाभिर्विधेयस्तवायं जनस्त्वयि प्रतिपादयत्यात्मानमिति मन्दाक्षविलक्षसन्नकण्ठी कथञ्चिदकथयम् ।

अथ स महाभागोऽपि विश्वम्भराभारवहनोच्छूनांसपीठकमठराजपृष्ठनिर्भर-प्रतिष्ठम्, उद्भूतसत्त्ववेपथुस्खलितनीलनलिनदलद्युतिमण्डलाग्रदण्डम्, उदञ्चिता-विरलपक्ष्मलमृदुलरोमपटलम्, अश्रान्तविश्रान्तविश्वभ्रमणनिस्सहश्रियम्, ऊर्जमासावसानवीतनिद्रनारायणपरित्यक्तमिव शयनपन्नगपतेरनिर्मुक्तनिर्मोक-मांसलाभो(ग)भोगम्, आशामुखपर्यस्तपृथुलकीर्तिकल्लोलिनीस्रोतः(प्रो)तमूल-विकटतटम्, आविर्भवत्प्रतापतापितत्रिविष्टपादिविष्टपत्रयम्, उद्गच्छदादित्य-मिवोदयपर्वतम्, आधोरणप्रेरितकुञ्जरघटाबन्धपाटनपटुपरीणाहम्, अवरुग्ण-बलाहकावलीमेलकमिवावग्रहसमीरणम्, ऐरावणकरदण्डपीवरम्, आयम्य दक्षिणं बाहुम् असकृदरातिसीमन्तिनीसीमन्तसीमसिन्दूरमार्जनादिवार्जितम्, अनवरत-मनोरथातिवर्तितवसुवितरणभारवहनसाहाय्यकप्रीतचिन्तामणिप्रसादीकृतमिव, रुदित-ताम्रमन्नयनकोकनदपरागपुञ्जसंक्रान्तमिव, सर्वाङ्गपूरणपरीवाहप्रसृप्तमिव, अनुरक्तकामिनीहृदयह्रदावगाहनाधिगतमिव, कविप्रशस्तिसरस्वतीप्रवाह-मज्जनाहितमिव, रागमावहता साम्राज्यसम्पल्लीलाकमलेन, मायासमाधिमुद्रित-बहिर्व्यापारवीतरागभगवज्जनार्दनविरहदुःस्थलक्ष्मीशयनायेवोपकल्पितेन, सत्त्व-सुतस्वेदसलिलावसेकशिशिरेण, कल्पद्रुमपल्लवेन पाणिना त्रपासंकुचिताङ्गुलिदलं मम करमग्रहीत् ।

तस्मिन्नेवावसरे क्वासौ राजा सुदेववंशवर्द्धनः सुरथः, प्रतिगृह्णातु भगवता शौनकेन महेन्द्रेण ... [illegible] ... एव तमुद्देशमागत्य

मम तातो विबुधवार्द्धकिरेकघातबहुवेधिना मकरध्वजशरेण कीलितमिव, भावाविर्भावविसृतस्वेदजलजतुद्रवेण योजितमिव, इतरेतरप्रसृतकण्टकसूचिस्यूतमिव, परस्परपाणिपीडनाकुञ्चिताङ्गुलिदलानङ्गपाशबद्धमिव, नखमयूखसुधालेपघटनादेकतां नीतमिव, आवयोः करयुगलमुत्कम्पशतेनाप्यविघटमानमपश्यत् ।

पश्यंश्च तथाविधां स्वतन्त्रप्रवृत्तिमावयोस्तर्कुटङ्कत्वष्टृमार्त्तण्डखण्डैरिव समागतेन, कुपितकृतान्तकोदण्डदण्डप्रचण्डभ्रूलताभीषणेन, सत्त्वजातशोणितासवपानशोणकालरात्रिरसनासनाभिनयनेन, श्वासधूमधूसरिताशावकाशेन, स्फुरदधरवाडवशिखेन मुखेन सकललोकदुष्प्रेक्षो दहन्निव, हतोऽसि रे मानवापसद! विकर्त्तनकुलकलङ्क! यस्त्वमेवंविधमधमसाहसमवलिप्य मामध्यवस्यसि, तदपवहतु त्वामियं काञ्चना सरस्वती। त्वं च कुलपांशुले! प्राप्स्यसि स्वतन्त्रतायाः फलपरिपाकम्। अनेन दुरात्मना चिरविरहिणी भविष्यसीति तमेनं च जनमशपत्। शापमुत्सृज्य त्वरितमपसरति पितरि किञ्चिदाश्चर्यमभवत्। एकज(त)स्तमालदलसच्छविच्छायमूर्द्ध्वंवर्धमानमधोविस्तारि सरस्वतीस्रोतस्तं महाभागम्, इतरतः कज्जलगिरिशिखरसोदरमाशामुखेभ्यो निर्गतं तमिस्रमेनमभागधेयं जनमन्तरयाञ्चकारेत्येतावदहं स्मरामि, परतो भगवती मूर्च्छाऽपहृत्य दुःखाद्वैतसाक्षिणीं चेतनामनुकम्पयेव मामालिलिङ्ग।

मूर्च्छावसानप्रबुद्धा तु न तमशिशिरांशुवंशवर्द्धनम्, न सखीजनम्, न च तातम्, अपि तु पितुर्जामातरि भगवति त्रयीमयतनौ चरमाचलमौलिमण्डनमाणिक्यखण्डभूते न्यस्तलोचनानि विरहातङ्ककाकुकूजिताकर्णनव्यथितलोककर्णानि काञ्चनाकूलचक्रवाकमिथुनानि केवलमवालोकयम्। अचिन्तयं च— किमिन्द्रजालमिदम्, अथ मायेयम्, आहो स्वप्नविभ्रमोऽयम्, उत तथ्यमेतदिति कं पृच्छामि, कस्य शरणमृच्छामि, केन त्राणमिच्छामि, कुत्र गच्छामि, कस्मै हृदयं प्रयच्छामि? किमिदमेकाकिनीमपहाय मामपगतो दिगन्तरमेष सुभगो जनः? कथमेतदपत्यवत्सलेन तातेनोपेक्षिताऽस्मि? कुत एवमालोकसुभगे गभस्तिमालिकुलदीपे प्रतिकूलेन विधिनाऽन्तरिते छायेव सततमनुवृत्ता मोहान्धतमसमलिनमेनं जनं तत्याज मन्दारिका? कस्मादित्थमत्र विपिने प्रलयमुपगतां मां मुमोच मन्दोदरी? किमत्र वा चित्रम्! यत्र व्यसननिपातनिस्सहे प्राणाधिकः प्रणयी न प्रमाणयति प्रेमाणम्? अत्र प्राणप्रिया सहचरी रक्षति सौहृदमिति केन संभाव्यते? हा वयः शैशव! क्व गतमसि? यस्मिंस्त्वयि पांशुक्रीडितेषु करावेव मलिनयति रजो न भोगसंकल्पेषु मनः, वीणास्वङ्गुलिदलानि तरलयति रागो न पुरुषेषु चक्षुः, न दृष्टिः श्रुतिमतिवर्त्य वर्त्तते, न वक्षः काठिन्यमवलम्बते, न मध्यं बलिभिरवरुध्यते, न नितम्बचक्रवहनेन खिद्यते तनुः, न मन्थरा भवति (ग)तिरिति

 

विकारमात्राविरहितेन तेन वयसा त्यक्तमात्मानमनुशोचामि । हा सुरनगरगोपुरपरिसरभूमयः ! क्व वो दर्शनम् ? का सञ्चरणचर्चा ? हा मातरपत्यप्रीतिकातरे ! ममेदृशं वैशसमुपश्रुत्यापि धारय जीवितम्, अवारयः खलु मामममरलोकमपहाय मर्त्याननुसरन्तीम् । हा तात! तत्कालकोपाविर्भूतशापवैशसग्रस्तामायतिषु नूनमनुशोचिष्यसि माम्,अयि भगिनि संज्ञे! नासत्यजननि! प्रत्यक्षमभिवीक्षितास्मच्चरितो निखिललोकसाक्षी परिहासकथासु व्रीडया विडम्बयिष्यति भवतीमद्य भगवानावृत्तः, सहस्वार्ये परितापम्, अर्कपरिग्रहोऽसि, पूर्वमौर्वमुदरे दधर्थ । ज्यायसि ! बोधय विवस्वन्तमेष प्रतिपालयतु मां यावद् व्रजामि शौनकस्याश्रमम्, अथवा कृतमनेन, मम हि दिशो दश विशदयत्यपि कुशेशयवतीजीवितेश्वरे विश्वमन्धतमससंकुलमेव, विकटकण्टकविकला एव पन्थानः, कुसुमशरतस्करापह्रियमाणचित्तवि (भि) त्तैव तनुभित्तिरित्येवं मम करुणप्रलापमाकर्ण्य निमीलितासु संकुचत्संवर्त्तिकाचक्रवालत्वरितापसृतमधुकरनिकरझङ्कारकैतवेन, प्रसीद भगवन् ! आपन्नानुकम्पया परितः परिभ्रमसि, प्रदर्शय चित्राङ्गदायाः प्राणेशमात्मनः प्रणप्तारम् इत्यभ्यर्थयमानासु बद्धबिसप्रसूनाञ्जलिपुटासु पुटकिनीषु, परिभूय पद्मिनीनां प्रणयनियोगमपेतपुण्याया मम स्पर्शपाप्मानमसहमान इव करानपच्छिद्य चरमाचलमौलेर्महार्णवमघमर्षणाभिषवाय प्रविशति त्रयीमयमण्डले मार्तण्डे निद्राकषायकेसरिकटाक्षकडारशोचिषि, सान्ध्यसलिलाञ्जलिभिरिव धौते प्रतीचीरागे, चिरेण कृष्टमहीकृतादिव विकचसंकुचितादरविन्दकेदारादुप्तभ्रमरमयतिमिरबीजविमर्दभयादपसरत्सु समाकृष्टकाष्ठाकुलेषु गोपतेर्गोषु, कमलवनकेदारसीमनि परागपुञ्जस्थगितेन मकरन्दसेकविक्लेदकोमलेन बद्धकिसलयचक्रवालालवालेन मधुव्रतबीजव्रातेनेव प्रसूतेषु तमिस्राङ्कुरेषु, पङ्कलेपमलिनैर्वनमहिषयूथपतिभिरिव कज्जलाचलवप्राभिघातोद्धूतधूलिधारामलीमसतै (तमै) र्गजग्रामणीभिरिव लोकालोकपरभागगण्डशैलैरिव प्रलयोद्वेललवणार्णववेलास्थूलकल्लोलैरिव तमोभिरनिज (श)हुङ्कारतर्जितमूकीभवदितरद्विजव्रजेस (षु), मित्रान्वयविद्वेषिणो नक्षत्रवर्चसि रज्यतः कौशिकस्य वल्लभेषु, अधरलोकसमुचितो (द) वासेषु, द्यावापृथिव्योरन्तरमवष्टव्या (भ्या) वतिष्ठमानेषु, त्रिशङ्कुचरितमनुचरत्स्वन्धकारचक्रेषु, क्रमेण च प्राचीमुखं धवलयति जगदण्डविघसनप्रीतकल्पक्षपाचण्डाट्टहास इव तालीदलविपाकधूसरे ज्योतिषि पूर्वपर्वतकन्दरोदरगल्लविवरादुद्गत्य मित्रविरहविधुरां पुरन्दरप्रेयसीं हरितमाविध्य बाधमानेषु कालदशनदण्डकरालेषु कोकलोकशोकाकरेषु दोषाकरकरेषु धारयितुमसूनसमर्था, तदात्वसमुचितं प्राणपरित्यागमेव मन्यमाना, तारागणप्रतिबिम्बेन सलिलमेतदिति निर्णयन्ती, तमिस्रसागरगर्भपतिते सरस्वतीस्रोतस्यात्मानमपातयम् ।

पतन्ती तु भगवति काञ्चने ! प्रापय मां कृतान्तस्य कान्तस्य वा समीपम्, अपनयोभयथापि मम मन्मथव्यथाम्, अथ यथाऽन्यस्मिन्नपि जनुषि तस्य तरणिवंशमुक्तामणेराननलिनमवलोकयेयमेवमाधास्यसीति मुहुर्मुहुरयाचिषि। भगवती काञ्चना सरस्वती तु जववता प्रवाहेण बलवदपवाहयन्त्यपि मामम्भसि नामज्जयत्, आवर्त्तेषु नाभ्रमयत्, उपलोद्घातेषु नापोथयत्, अतिजरठकठिनासु शैश(व)ललतासु न वबन्ध, पुण्डरीकभ्रमतरलेन कुमुदवनमपहाय धावता भ्रमरकुलेन न ममाननमदंशयत्, अभिनवमृणाललतावितर्कलुब्धराजहंसचञ्चूपुटेन न बाहुमपाटयत्, उपतीरवानीरविटपिविटपप्रालम्बेषु न व्यलम्बयत्, केवलमात्मनोऽङ्कादवरोप्य धात्रीव मात्रङ्के गोमतीक्रोडे निचिक्षेप।

अहं तु विफलप्राये प्राणपरित्यागसाहसे किमिदमिति चिन्तयन्ती प्रथमास्फोटनस्फायदुद्धूतभसितधूलिधवलामिव धूर्जटिनिवसनगजत्वचमुदितमृगलाञ्छनच्छविच्छुरितामापातालगभीरमुदिरमेदुराम्भसमासाद्य गोमतीम्, अनया प्रतिकूलदैवगुणप्रेरणपरतन्त्रया प्रतिस्रोतोऽपवाहितमात्मानमवलोक्य तस्यामपि दशायां कम्पपतितां मृगीमिव किरणबाणेन तुदति विगतदये कुमुदिनीदयिते तमुपालभे—भगवन् ! भवमूर्द्धाधिवासदुर्ल्ललित ! ललितरोहिणीकरपरिचरणलालितचरण ! चराचरगुरो ! चन्द्र ! किमतिमात्रमित्रविरहबाधाविधुरसरविन्दषण्डमिवैनं जनं मर्द्दयन्न लज्जसे ! पश्य तावदिदमसदृशमनाथजनविशसनमवलोक्य निमीलितनलिनलोचना न भवन्तमालोकते कमलिनी, हसति कुमुदषण्डम्, उत्तरलतरङ्गबाहुवेल्लनेन वारयति वारिधिः, अन्याय्यमेतदार्यपुत्रचेष्टितमिति लज्जया द्रवीभवति तव कान्ता शिला, मुखरागमपि त्वयि त्यजति रजनी, ब्रह्मनिवासमन्दिरादरविन्दलोकाल्लक्ष्मीर्न्निर्वासयति दुर्वासस्सोदरे कुलकामिनीलोचनलावण्यसर्वस्वतस्कराणामिन्दीवराणामुन्मीलनायोदयमारोहति त्वयि राजनि कर्कशकरपातभयमभिनयन्ति पाण्डुना मुखेन ककुभः, दूराद् दूरमपसरति गिरिकन्दरोदरेषु निलीयते कुवलयदलकोमलद्युतिरशेषजननयनहारी पुण्यजनप्रमदवर्द्धनो महिमनिधिरन्धकारः, तत्प्रसीदोपसंहर दुस्सहमिदमर्मचिरितीत्थमभ्यर्थनाशतबद्धाञ्जलौ मयि जातदयेनौषधिनायकेन जैवातृक(के)णापहृत्य वेदनासंवेदनमयीं चेतनामनवरततुषारपातमुद्रितेनारविन्दवनेन सह ज्ञातेयसमुचितं निमीलनमन्वभावि मम नयनयुगलम्। अतः परं कियन्ति योजनानि मामपोवाह प्रतिस्रोतःप्रसृतगतिर्गोमती ? कथं वा प्रवाहादतिदूरमुदपातयत् ? कया वा गत्या तत्र मां प्रक्षिप्य गव्यूतिमात्रमपससारेति न स्मरामि।

यावदुपोढतुषारशीकरशिशिरेण प्रभातमातरिश्वना वाऽन्येन वा केनापि

निमित्तेनोपलम्भितचेतना प्रत्यूषपूषपादस्पृष्टेन पद्मवनेन सहोन्मील्य लोचने अनवरतमुद्दण्डताण्डवप्रसक्तखण्डपरशुद्वितीयमूर्त्तेरर्णवस्य तरलतरपूर्वापरवेला-तरङ्गकरतलतालनमुखरमुखयुगलतया मुरजलीलाविल (ड) म्बिनीमानमितकोदण्ड-दण्डकुटिलस्य क्षारसागरस्य पूर्वापरकोटिद्वयसंसक्तामिव मौर्वीम्, उर्वीवर-वर्णिनीरोमराजिमिव कुलाचलकुचक्रोडनिरन्तराम्, अन्तरान्तरा स्रोतस्वती-प्रवाहवलिभङ्गविच्छिन्नां च प्रथमनिसृष्टसरिद्दूतीशतोपमन्त्रितेन प्रसरदुत्कलिका-सहस्राकुलेन लवणनीरनिधिना सह संगन्तुमभिसरन्तीमिव तमालवीथि-निबिडच्छायनीलनिवसनावगुण्ठिताम्, अश्रान्ततिमिरनीहारदुर्विभाववर्त्मानुसारि-णीम्, उत्तालमरुत्तरङ्गिततरुविटपाटोपकपटादुद्गृहीतसत्त्वकम्पाञ्चितरोमाणम्, अतिवेलोद्वेल्लदेलावल्लिसौरभ्यवहनललितवेलावनराजिसहचरीहस्तावलम्बिताञ्च, मत्तमहिषविषाणपेषणक्षिप्तपाषाणखण्डचकितकपिकुलोत्पतनवेपितवटविटपाम्, अवटवाटघट्टननिष्पिष्टनिश्चेष्टजरदजगरश्वासावकृष्टैः कष्टप्रणष्टपुष्टमृगैरुत्सृष्ट-तिमिराञ्जनपुञ्जपूरितनिकुञ्जसीमानम्, उलूककुलकोपकलकलविकलमौकुलि-निकायमुक्ततापिच्छगुच्छपरागपटलमेचकगह्वरोपह्वराम्, आसीनगण्डकगण्डकण्डू-याकषणविनोदमुदितधेनुकाजनाम्, अध्वनीनभयजननहिक्कितमुखराच्छभल्लगल्ल-विवराम्, अच्छसरित्कच्छवेलसच्छायविश्रान्तवराहदन्तोत्खातमुस्तास्तम्बसुरभिम्, एकतो दोबलोद्दलितगजदन्तागदागुरुस्कन्धैर्लतातन्तुसन्तानपरिकरावनद्धतरुवल्कल-तूणीरनिषक्तबाणमुष्टिभिः, अष्टरत्न्यायतवेणुदण्डकल्पितकोदण्डैः, सत्त्वत्वगु-त्तरासङ्गसंवीताङ्गैः, अश्वतरतुङ्गकौलेयककण्ठपाशावसक्तकरैः, मूर्त्तिमद्भिरिव हिंसारसैः, आखेटकिभिरशून्यपक्कणपरिसराम्, अन्यतो मुनिभिरुपासितपुण्य-तीर्थाम्, अपरतो हरिनखरवज्रपातपाटितमत्तकरटिकटकटाहतटस्रुतरुधिरघोरणिम्, इतरतः प्रतिगजवितर्ककुपितगन्धसिन्धुरदन्तमुसलदलितनीलगण्डोपलगलितधातु-सारधाराम्, अभितः सूचिभेद्यतिमिरगर्भैरुपरि पल्लववलयमुल्लासयद्भिरखिल-लोकघासघस्मरकरालहालाहलोदरम्भरिनीलकण्ठकण्ठोद्ध्वंवर्धमानचटुलललाटलोच-नानलकीलाकलापलीलाललितैर्लतावितानैः परिवृताम्, उदधिवेलामिव वना-न्धकारदुर्विभावतनुविभागस्यापि सुखप्रसुप्तस्य हरेरायतेन निःश्वासेन वेपित-नागप्रवराम्, हिंस्रवनचरसत्त्वसंकुलां च, नागरजनतामिव भूभृत्पादोपजीविनीम्, कामिनीमिव मदनकण्टकोदयदन्तुराम्,आन्वी (क्षि) कीमिवाक्षपादपोषितद्विजप्रस्तुत-विविधजल्पाम्, आस्थानाजिरभूमिमिवानेकधातुरङ्गेण सङ्गताम्, सन्ध्यामिव सर्वदारुणाम्, रजनीमिव भ्रमदृक्षचक्रसम्बाधाम्, दाशरथिबालचरितकथामिव ताल-काननप्रविशदनेकशिलीमुखाम्, भारतसमरभुवमिवोद्वेल्लदर्जुनबाणासनोत्पतितशिली-मुखनिध्वानचकितधार्त्तराष्ट्रशताम्, उत्तरगोग्रहवार्तामिव दुर्द्धरधनञ्जयहेति-

संज्वरक्वथितनादेयजीवनभीतमत्स्यकुमाराम्, विश्वापदामाधानाय पालितानेकश्वापदाम्, रमणीयतया विततया च सदानव्यालोचिताम्, मदान्धमातङ्गकुलविमर्दमृदितजातिगन्धामपि पावनीम्, अवनीलोकादिव वनीलोकादप्यधिकाम्, असंख्यसत्त्वसंकुलाम्, अनन्तरकराम्, अशेषाश्चर्यनिधिम्, अम्बिकाजनकपादपर्वताटवीमपश्यम्, अचिन्तयं च–

हा ! किमेतदद्यापि न जहति माममी वज्रलेपघटिता इव प्राणाः, केनेदमतिनृशंसमनुष्ठितम्, येन योजिता मयि वेदनासंवेदनमयी चेतना, तदत्र महति विपिने कमभ्यर्थये ? कः करुणया जीवितेश्वरं दर्शयेत् ? अथवा जीवितमपहरेत् ? सोऽयमुन्निद्रकुवलयदलनीलमांसलद्युतिराविर्भवन्मुग्धदुग्धोदवेलाधवलदशनमुसलकौमुदीमुदितमुदिरमेदुराननो महात्मनामग्रणीरपि न वेद वशापरवशो विरहजनदुर्दशा गजग्रामणीः, एष च विषमविषाणकोटिस्वस्तिकेन कासरीकपोलमूलमुल्लिखन् महिषयूथपतिरस्मिन्ननवसर एव याचितुम्, असौ तु केसरिकिशोरीकरजभङ्गिविच्छुरणविवृद्धरणरणको हरिः कपिकुलोत्पतनचकितकुपितकरिप्रवरकराकृष्यमाणकेसरमात्मानमपि न चेतयते, क एनमनुयुञ्जीत प्रवृत्तिम्, अस्य तु शिलामयस्य सर्वमहतां लङ्घने निबद्धमेखलापरिकरस्य पर्वतस्य केन संभाव्येत दयालवः, दयालवो हि नैवमतिस्तब्धमवतिष्ठन्ते, तिष्ठन्तु तावदमी, यदि कापि देवता कोऽपि देवयोनिर्वा दुष्टसत्त्वसंकटामिमामटवीमधिवसति, तदा विपद्विवर्तपतितां त्वष्टृतनयामशरणामनुगृह्णातु, स्वयमुपसंहरतु तिरस्करणीं विद्याम्, ददातु दर्शनमिति मच्चित्तचिन्तासमनन्तरमेव कोऽपि मूर्त्तिमानिव करुणरसः, गृहीतविग्रह इव सत्त्वप्रकर्षः, सशरीर इव दाक्षिण्यभावः, विकचकुवलयदलमेचकया तनुरुचा कृतवर्णसंविभाग इव तमालवनवीथिभिः, असितवर्णपर्णवपुषोपनीतकालिन्दीसलिलस्नपित इवातिथेयपरमया वनदेवतया, हरिचन्दनक्षोदाङ्गरागपरिमललोभादावृत इव भ्रमरव्रातेन, दरदलदरविन्दसोदरया कर्णोपकण्ठपर्यन्तविततया दृशाऽवर्द्धयन्मम प्रमदम्, उत्तप्तचामीकरविकारकेयूरकोटिका (धा) रिणा कर्कोटकभोगविकटदीर्घेण सुरासुरसमरोद्यतसुनासीरनासीरणस्तम्भेन बाहुना, नूतनप्ररूढरम्भागर्भकिसलयमसृणमहिराजनिर्मोकशुचिलघुतरमात्मनो दुकूलमेनं जनमुज्जीवयितुमुपवीजयन्नदृश्यत दिव्यलक्षणः पुरुषः।

स पुनरामन्द्रमुदि (र) रसितभ्रमचकितचातकचञ्चूपुटप्रसारिणा, घनस्तनितवितर्कबृंहिताहङ्कारहरिहूङ्कारप्रतिफलनपूरितकन्दरोदरेण, वेपमानविपिनसत्त्वेन, वत्सलगद्गदेन वचसा दुहितरं पितेव मामिदमनुमन्त्रयामास–वत्से ! कल्याणिनि चित्राङ्गदे ! प्राणिति तव पाणिग्रहणसौभाग्यदुर्ललितः सुदेवतनयः, मा स्म भृशमनुतप्यथाः, गोपाय तावदात्मानम्, अवसरे ज्ञास्यसि माम्, अनेन पश्चिमां दिशम-

भिवर्द्धमानेन कान्तारवर्त्मना कलिन्दकन्यायाा दक्षिणं तटमासाद्य भगवतश्चराचरगुरोः श्रीकण्ठस्य चरणमूले गमयिष्यसि कियतो निमेषान्, अनन्तरमाधास्यति तव मङ्गलमनङ्गारिः,प्रियेण योजयिष्यति त्वां पार्वतीप्रसाद इति त्वरितपदमतिपरिमितमभिधायान्तरधित स देवयोनिः। कुतश्चिदाविर्भूय मम तापमुपशमयति मद्भाग्यावग्रहेण दूरमुत्सारिते तस्मिन् महापुरुषमुदिरे द्विगुणमदह(दा)धिमिहिरः।

प्रियसखि! तत्रेत्थमनुवर्त्तमाने मदेकसाक्षिणि व्यसनोपनिपातव्यतिकरे निरवशेषोन्मूलितापि निरवलम्बैव पल्लवमुल्लासयामास मदाशावल्लिः। भविष्यति स दिवसो यस्मिन्नवसानमस्या व्यसनपरम्परायाः। स्वप्नेऽपि वा न विसंवदन्त्येतादृशानि दिव्यपुरुषवचनानि, किं पुनः प्रत्यक्षमुदीरितानि। विसंवदन्तु वा, तथापि क उपायः, न त्यजन्ति माममी प्राणाः सर्वथा।

यथा निर्दिष्टमनेन विग्रहवता विपन्नजनानुग्रहेण पुरुषेण, तथैव प्राप्तकालमिति मनसा विमृश्य वारुणीमभिप्रतिष्ठमाना क्वचित् क्रकचकठोरजरठदर्भदलोत्कृत्तधैनुकत्वगसृग्धाराविचित्रपद्धतिना, कुत्रचिद्वेणुमूलस्थूलवेत्रवल्लिवरत्रासंयममोचनश्रमनिःस्पन्दमत्तमातङ्गनिरुद्धनिकुञ्जान्तरालनिर्गमेण, क्वापि स्तम्बापविद्धकीचकशाखासूचिविद्धमहिषभाङ्कारभीषणेन, कुत्रापि जरदजगरपृष्ठचत्वरविश्रान्तश्रान्तचमरचक्रवालवालधिव्यजनवातवीजनसुभगेन, कुहचिदुपलोद्घातप्रतिघातवन्ध्यव्यवसायमृगकदम्बविशसनकृतार्थलुब्धकेन, एकत्र कर्कन्धूगुल्मकण्टकप्रोतरोमसु भल्लूकेष्वनपराद्धमृगयुमल्लभल्लेन, इतरत्र शृङ्गसंग्रामव्यासक्तकुरङ्गयुगयुगपद्वधव्यग्रव्याधनाराचेन, अन्यत्र गजगण्डभ्रमोत्पतितगण्डोपलप्रदरप्रविष्टकेसरिसटाऽऽकर्षकुतुकतरलकपिकुलाकुलेन, परत्र श्वाविदङ्गरोमग्रथितगोमायुतारुदितभैरवेण, कान्तारमार्गेण विलङ्घ्य कियतः प्रदेशान्, उल्लङ्घ्य कतिचन विषमपाषाणखण्डशाणकषणनिशितरयाणि, तीरद्वयप्ररूढपिचुलनिरन्तरशाखाप्रालम्बवारितरविकरप्रवेशशिशिरनीराणि, सलिलवेगापोढदीर्घदारुघट्टनघर्घरध्वनीनि, निध्वनदध्वनीनभयजननजृम्भालगोनर्दगल्लमर्दलानि, शैलसीमनिष्पेषमुखरावर्त्तभ्रमिततालफलस्थूलोपलपोतसंघट्टझर्झरतालानुपातितरङ्गताण्डवानि, दुरुत्तराणि, गिरिपरिसरसरित्स्रोतांसि, खेटवाटेनाटवीं विगाहमाना सशोकं जरद्भिः, उद्भूतविकारं युवभिः, उपहासमुखरं शिशुभिरवलोकिता शबरैः, एकया फलमूलोपहारैः, अपरया वृत्तानुयोगैः, इतरया दशानुशोचनैः, अनुगृहीता वनेचरवृद्धया, मत्तेति, उन्मत्तेति, मूकेति, बधिरेति, पिशाचाविष्टेति, वनदेवताप्रकोपोपसृष्टेति, यक्षाधिष्ठितेति, तालजङ्घमोहितेति, वेतालगृहीतेति, पूतनापनीतचेतनेति, उल्कामुखविप्रलम्भप्रणष्टवर्त्मेति, पाण्डुव्याधिरुग्णेति, शीताञ्चितरोमेति, वातवर्द्धितवेपथुरिति, आमवातस्तम्भितेति, रजोदूषितनयनेति, घर्मखिन्नस्विन्नगात्रीति, कफरुद्ध-

कण्ठीति, अपस्मारदुःस्थितेति, उपेक्षिता सत्त्वविकारभावानामनभिज्ञाभिः, पक्कण-पुरन्ध्रिभिः, विद्राविता प्रियङ्गुकेदारपालैः, निर्भर्त्सिता प्रियालवनगोपैः, दूरमपसारिता विकीर्णनायैः शौनिकनायकैः, भ्रूसंज्ञया निवारिता वन्यपशुबन्धपाशपाणिभिः, भीषिता चापगुणन्यस्तशरैर्माजीवैः, संतीर्णा कृच्छ्रेणारण्यग्रामान्, मायानगरमुत्तरेण, दक्षिणेन कुब्जाग्राममुत्तीर्णा भगवतीं भागीरथीम्, नातिविषमया तुषारगिरिपादपर्वतद्वयान्तरालद्रोणिसीमया दशयोजनान्यतीत्य ब्रह्माण्डखण्डाभिघातविघटितबन्धनामिव कलिन्दाधित्यकावेणिवल्लिम्, आपादविलम्बिनीमवनिवनितारोमलतामिव कुलाचलकुचसन्धिचुम्बितमूलाम् आवर्त्तिप्रतिष्ठाननगरप्राकारनाभिपर्यन्तविलम्बिताग्रभागां च, मृगमदपत्रभङ्गिलेखामिव भारतवर्षश्रियः, कलिकलुषकर्त्तनकरवालव्रततिमिव वीरव्रतैकधनस्य धर्मपुरुषस्य, लक्ष्मीमुखचन्द्रोदयनिमीलन्नारायणनाभिविश्वपुष्करक्रोडनिलीनामिवालिमालाम्, आलानस्तम्भलोहशृङ्खलामिव नीलगुणलावण्यकुञ्जरस्य, वासुदेवशरीरसंविभक्तमेचकरुचिमिव, कामपाललाङ्गलहतिभीतिमलिनामिव, नदीनायकाभिसरणसमुचितश्यामनिवसनावगुण्ठितामिव, रणताण्डवपाण्डित्यमण्डितमध्यमपाण्डवदोर्दण्डगृहीतगाण्डीवकोदण्डनिर्गत्वरकाण्डवर्षघर्षणखण्डिताहङ्कारनिष्प्रयत्नाखण्डलनिर्विघ्नखाण्डवदाहप्रीतोषर्बुधधूमधारयेव मलीमसाम्, अपनीतमज्जन्मनोमोहसंतमसामपि तमसासंगमेन नित्यश्यामलाम्, कालीयककालिमानं बिभ्रतीमपि पुरुषोत्तमत्याजितकालीयकाम्, मधुमथनस्यातिवल्लभामपि मधुपुरपरिसरविहारिणीम्, अनेकसरववृन्दावनविस्तीर्णगर्भामपि वृन्दावनगर्भलोठमानामासाद्य यमुनाम्, अमुयापि न निमज्जिता पयसि, न वेगेनापवाहिता, क्षणादिन्द्रनीलमणिशिलाश्यामलानामपामुपरि कादम्बिनीपृष्ठमिव क्षणद्युतिरुन्मिषन्ती दक्षिणममुष्यास्तीरमवातरम् ।

अथोत्तीर्य कालिन्दीपयसस्तालतुङ्गमपि तटप्रपातममरावतीप्राकाराधिरोहणाभ्यासवशादश्रान्तैवोल्लङ्घ्य भगवतो लिङ्गमयमूर्त्तेः श्रीकण्ठस्य कण्ठच्छायया श्यामलीकृतामिव, पर्वतनन्दनास्तनपरिरम्भसंक्रान्तमृगमदाङ्गरागामिव, यमुनया संविभक्तनीलिमानमिव, गजत्वगावृतामिव, शरीरार्द्धहारिकालिकावर्णविनिमयेनोपात्तनीलगुणामिव, कालरात्रिविप्रयोगासहामिव, ताण्डवभ्रमणिकोद्गीर्णहालाहलप्लुतामिव, शबरवेषचरितोचितहरितपर्णनेपथ्यामिव, कुवलयदलनीलकन्दर्पकायकालागुरुधूमधूपितामिव, बहुलनल्वविस्तारिणीं चुलुकोत्सेक्यां बाहुतरणीयां दीधितिच्छटामपरामिव यमुनां पुनः प्राविशम् ।

अनन्तरमस्य बलवतो मेचकस्य कान्तिनिर्झरस्य प्रतिस्रोत इव कियदन्तरमुपेत्य तस्यान्तः प्रलयार्णवपरिवाहप्लुतां कैलासकटकस्थलीमिव, नीलोत्तरासङ्गसंवीतां कामपालवक्षस्तटीमिव, नारायणतनुप्रभापिहितामहिराजफणामिव, मेघान्धकार-

गर्भंगतां बकावलीमिव, कल्पक्षपासंकुचितामच्युतनाभिपुष्करकलिकामिव, जीमूतकुथापवारितामैरावततनुश्रियमिव, स्तनन्धयलम्बोदरकरकमण्डलुनिह्नुतां गौरीस्तनकलशीमिव, धरणिवरवर्णिनीस्मितावदाताम्, अनेकतालतुङ्गस्य ताण्डवप्रसारितखण्डपरशुदोर्दण्डविडम्बिदिगन्तचुम्बिशाखस्य पीनायतकपिलजटाकलापेन, महिमभूतिसमुज्ज्वलेन, वनलतासूत्रसन्ततिस्यूतजीर्णपुराणवल्कलसंवीतेन, शीतवातातपेष्वविकारिणा, सततपीतरविमरीचिना, मुहुरास्वादितपवनपूरितकोटरोदरेण, जलैकजीवातुना, सर्वदैकपादिकयोत्थाय तपस्यता वपुषा गृहीततीव्रपाशुपतव्रतस्य महतो बोधिपादपस्य मूलमाश्रितां स्फटिककुट्टिमवेदिमद्राक्षम् ।

अस्यां च वेदैरिवोपासितम्, पुरुषार्थैरिव सेवितम्, नारायणबाहुभिरिव परिचरितम्, ब्रह्मवदनैरिव स्तुतम्, अर्णवैरिव परिगतम्, उपायैरिव परिक्षिप्तम्, आशाभिरिवानुगतम्, प्रमाभिरिव प्रमितम्, धर्म्मचरणैरिवाधिष्ठितम्, आननैश्चतुर्भिरुपेतम्, अपौरुषेयप्रतिष्ठम्, अष्टतनोरीशानस्य भगवतो भूतभावनस्य मरकतमयं लिङ्गमपश्यम् ।

तस्य प्रथममायतेन सलिलपूरितेन नयनेनैवार्घमुपापादयम्, अनन्तरमञ्जलिनापि। दूरमावर्जितकेशपाशमादौ वदनमेव पादमूलमुपानयम्, ततो लम्बमानालिमालासंकुलं कलिन्दकन्याह्रदादाहृतं पुण्डरीकमपि। पुरः पुराणपुरुषे संसारनिर्विण्णमात्मानमेव न्यवेदयम्, पश्चात्तस्मादेव वनस्पतेरवचितं फलमपीत्यष्टमूर्त्तिमपचित्य वाचा किञ्चिदस्तवम्—अकारणविरहिजनवैरिणो दारुणस्य कदापि कुत्रापि करुणामभजतो मायाविवर्त्तार्णवशिशुमारस्य भवति भव ! भवानरातिरितीतरदैवतेभ्यो भवन्तमेव बहु मन्ये। त्वामासाद्य क्षीण एव न विप्रयोगव्यथितानुपतापयन्कलङ्कमात्मनो वर्द्धयति विधुरिति तव चरणमेव शरणं व्रजामि। सततमपर्णातिनुलतैव ते रोचते, विशाख एवैकस्तव तनयः, न कदापि स्थाणोस्तवोपलभ्यते रागपल्लवः, नूनं बिभेति भवतो मित्रव्यसनदिनादारभ्य पुष्पाकर इति त्वदभ्यासमेव निवासाय रोचये, प्रलयवातमपि पातुमीशते गिरिश ! तव भुजाभोगभूषणभुजङ्गभोगाः, कथमेनाननुसरेन्मन्दस्य मलयमारुतस्य लव इति तव बाहुच्छाये निलीय तिष्ठामि, मखमृगव्याधस्य तव पुरतः का शक्तिरेतेषां करणहरिणानां परिप्लवितुमितीन्द्रियतरलतापरिहाराय त्वामनुधावामि, जय मृत्युञ्जय ! गोपाय मामतिदीर्घव्यसनपरित्यागोपायमविदुषीमिति स्तुत्वा प्रणिपत्य प्रदक्षिणीकृत्य दक्षिणामूर्तिमुत्क्षिप्य दक्षिणमितरेण चरणेन केवलं कियतः क्षणानतिष्ठम् ।

तथा तिष्ठन्त्यां मयि, गगनमध्यमध्यारोहति त्रयीमयतनौ तिमिररिपौ, मानमपहाय पादपपादमूले निलीनायां छायायां नीडप्रविष्टपारावतद्यूत्कारकोपिते, तस्य पिप्पलपादपस्य कोटरक्रोडविवशादुद्गत्य बेलावि नाद ति कुणीनखे, नैशानुराग-

परवशेन विततच्छदच्छदिरुदूढमार्त्तण्डसंज्वरभारेण मधुव्रतव्रातेन वारितातपे निद्राति कैरवाकरे, तुषारस्पर्शानुमितनीलोत्पलवनच्छायानिलीनकादम्बकदम्बे, तीरवानीरमूलविश्रान्तकुक्कुटकुटुम्बे, विषमविषाणताडनतरलवारितुङ्गतरङ्गैकतापन्नवनमहिषे, मातङ्गमदमकरन्दबिन्दुचन्द्रकप्रकरकिर्मीरे, कलिन्दनन्दिनीस्रोतसि सलिलमग्नः कोऽपि धाम्नां निधिरपर इव कोकलोकहृदयशोकहरणाय गृहीतबहुविग्रहस्य ग्रहपतिबिम्बस्य प्रतिबिम्बो महामुनिरदृश्यत ।

तेन तु त्रिर्निमज्ज्योन्मज्ज्य पवित्राण्यघमर्षणानि विनियुज्य भगवतो भास्करस्य निरर्घमर्घमुपपादयता करकिसलयाञ्जलिपुटेनादायोद्ध्वंमुत्क्षिप्ताः कलिन्दनन्दिनीसलिलबिन्दवो व्याकोषकल्पकोकनदकोषादुत्पतन्तीमलिमालां व्यलम्बयन् । पितृप्रेम्णा सवित्रा सङ्गन्तुमुच्छलितामिव यमुनामर्घमार्गाज्जर्जरीभूय निपतन्तीममन्यन्त जन्तवः । तामर्घवारिधारामेकेन तेजोराशिना करयुगलेन वितीर्णम्, अपरेणादरात् करसहस्रेण प्रतिगृहीताम्, अरुणावरजपक्षयुगलासनादवतीर्य संहृतेष्वहिपतिफणेषु निषीदन्तीमच्युतमूर्त्तिमिव न्यरूपयम् ।

अथ सावित्राणि यजूंषि पुरुषसूक्तं मण्डलब्राह्मणमन्यानि पवित्राणि च सामान्यावर्त्तयता मन्त्रैः सवितारमुपतिष्ठमानेन मुनिनोद्ध्वंमुत्क्षिप्ताभ्यां भुजाभ्यामुत्तभ्यमानमिव गगनशिखरमारोढुमक्षमत मार्तण्डमण्डलम् । असौ तु महर्षिरुत्तीर्य यमुनासलिलादभ्रपटलादिरम्मद इवावनिमाससाद । तत्र कपिलकान्तिवल्कलयुगलं परिधाय, निबध्य मेखलाम्, अध्वरानलभस्मना चर्चयित्वा कलेवरम्, ब्रह्मवर्चससंपदो वरणमधूकमालामिवैकामक्षस्रजमासज्ज्य कण्ठे, द्वितीयां तु रुद्राक्षमधुकरमालां शयकुशेशयाङ्गुलिदलेष्वसकृदावर्त्तयामास । स्नानीयतरुत्वचं निष्पीड्य, कलिन्दकन्यासलिलेन्दीवरसारेण पूरयित्वा, सितोपलकरकराजहंसोदरमेनमादाय सव्येन, तदितरेण तु करेणारिवर्गसमुत्सारणवेत्रव्रततिमिव दर्भरज्जुनिबिडबद्धकौपीनामादाय यष्टिमाससाद श्रीकण्ठस्य दक्षिणमवकाशम् । अत्र स्फटिककुट्टिमवेदिकायां निषद्य तेन निसर्गनीलेन करकोदकेनोत्सर्पिणा मरकतमयलिङ्गकिरणदण्डेनेव भगवन्तं श्रीकण्ठमभ्यषेचयत् ।

अथ निश्शेषत्यक्तनीलजलशुद्धाशये नैसर्गिकं धवलिमानमापद्यमाने कमण्डलुजलदखण्डे, क्षालनविमले प्रसादमुपयत्यनङ्गारिलिङ्गमये लावण्यसरसि, घनव्यसनाञ्चितसंकोचासु पुनरिव स्थानविकासमासाद्य प्रसरन्तीषु ममाशासु, पलितधवलविग्रहः, निरर्गलसरस्वतीप्रवाहरक्ताधरत्रोटिरनवरतानेकलिङ्गायतनभ्रमणताम्रचरणः, मानसे प्रेमाणमपरित्यजन्नविभागसंकलितवस्तुविशेषपरीक्षाविचक्षणः स मुनिराजहंसो मधुरं तथा चुकूज येन शारदोत्सवमवतीर्णममन्यत सकलोऽपि लोकः ।

तस्य सदा विग्रहेण गृहीतदण्डस्यापि सामसु मण्डलभेदेषु च निर्भरमासक्तस्य महापाशुपतव्रतस्येव मूर्त्तिमतो मुनीनां प्रवरस्य रौद्रसामगानावसाने प्रणिपत्य स्थितायां मयि करुणामृतपूरणोज्ज्वलवर्णा, श्रुतिकुक्षेरिवोद्गता, कदापि कोपरागविकारैर्वक्रिमाणमप्राप्ता, जात्वपि कापथेन न संचरमाणा, नित्यमेव परे चापरे च ब्रह्मणि प्रबुद्धा, सत्त्वमयीव, शीलघटितेव, दाक्षिण्योपकल्पितेव, अनुकम्पानिर्मितप्रतीकेव, वात्सल्यसूत्रस्यूतेव पपात पावनी दृक् च वाक् च—कल्याणमुखि ! काऽसि ? कस्यासि ? न वयसो न लावण्यस्यानुरूपमिदं तव व्यवसितं यदिदमतिमहद्वनमनुप्रविष्टाऽसीति परिमितमभिधाय मौनमास्थिते मुनौ विनयबद्धाञ्जलिर्न्यवेदयम्—भगवन् ! विश्वकर्मतनया चित्राङ्गदाऽहमेकदा मेरोरवतीर्य नैमिषप्रान्तवटविटपिच्छायानिषण्णेन राज्ञा सुदेवतनयेन सुरथेन तारामैत्रपरवशा पाणिमग्राहयम् । अस्मत्स्वातन्त्र्यकुपितेन पित्रा मयि च तस्मिन्नवनीपतौ च व्यतीर्यत शापः, येन स सुभगो जनो मम सखीद्वयं च क्वाप्यगच्छत् । अहं मोहाभिभूता नाज्ञासिषम् । अनन्तरं प्राप्तप्रबोधा बलवता निर्वेदेन शरीरमिदं काञ्चनायामपातयम् । तया गोमत्यामनया महाटव्यां पातिता । तस्यामाविर्भूतेन केनचिद्दिव्याकृतिना निर्दिष्टमधिरुह्य वर्त्म ततो बहुयोजनमुल्लङ्घ्य भगवन्तं श्रीकण्ठमत्रभवन्तं भवन्तमप्यवलोकितवती । नातः परमात्मनः प्रभवामि । यथेच्छति तथा करोतु दीनानुकम्पया गृहीतविग्रहः पशुपतिः, आपन्नाभ्युपपत्तिसाधनं वा पाशुपतो भवानिति कथञ्चिदतित्वरितमुदीर्य सिचयाञ्चलेनावृत्य वदनमतिचिरमरोदिषम् ।

रुदितावसाने तु यावदहमुन्मृज्योदमीलयमश्रुसलिलाविले विलोचने, तावदेव नयनानलच्छविच्छटाविस्फुलिङ्गचक्रालिङ्गितदिगङ्गनम्, अतरलतडिल्लताकडारदीधितिधाराकरालमुखमार्त्तण्डमण्डलम्, आयतश्वासवेल्लनस्फुरदधररुचकम्, उदञ्चितपलितधवलभ्रूलतालङ्घितस्वेदबिन्दुकिर्म्मीरकोपकपिलललाटपट्टम्, प्रतिपदिन्दुलेखावलम्बिततारकितसंध्यारागपाटलपरभागमिव गगनाभोगम्, आवेगवेपथुशिथिलजटाबन्धबन्धुरमूर्धानम्, अवसानवातवर्धितौर्वशिखाशतमिव सागरम्, अतिमन्युधमधमायमानभसितधूमधूसरधमनिसंततोरसम्; उत्पातकम्पतरलजलदानुविद्धभूधरघाटीकलापमिव मेदिनीगोलम्, आमूलदोलितोरुदण्डनतोन्नतासनबन्धम्, अन्यदेव युगान्तकृत्तिवासस इव, लक्ष्मीनिर्वासनसमयदुर्वासस इव, दानवदारणावसरवीतिवासस इव, वपुर्व्यलोकयमस्य मुनेः, अशृणवं च—धिगस्तु पारिप्लवप्रकृतिम्, अनपराधे त्रयीमयतनौ निजे जामातरि मार्त्तण्डेऽपि पातितकषणदण्डम्, अपत्यप्रीतिसुखमुषितचित्तवृत्तिम्, अभरवार्द्धकि विश्वकर्माणम् । अर्हत्यसौ पापचारिणी निग्रहम् । एषा हि माङ्गल्यमुखी

चित्राङ्गदा यदि निरुपमरूपसंपदा तरुणेनाभिजातेन साम्राज्यलक्ष्मीवता सुदेववंशवर्द्धनेन चिरायुषा सुरथेन दैवादुत कामादाहो नृपतिपत्नीपदाभिलाषाद् गान्धर्वेण परिणयेन समगच्छत। तत्किमनेन पापेन शापदण्डं पातयता क्रूरेण विश्वकर्म्मणा चिरतरं पतिवियोगमनुभाविता। किमपराध्यति वा तस्य वत्सः सुरथः, यमपत्राहयामास सरस्वतीस्रोतसेति त्वष्टुः शिरसि पततु ब्रह्मवाग्वज्रः, निजस्य कर्मणोऽनुभवत्वसौ फलम्, आसादयत्वतिचपलः कपियोनिमिति क्रोध-रूक्षाणि शापाक्षराणि। श्रुत्वा च सत्यमाहुर्व्यसनानि प्रसूते व्यसनमिति। तथा हि—

तथाविधेनैकेन दुर्विपाकानलेन क्वथितकलेवरा द्वितीयस्य पितुः कापेय-मापादयतः शापपावकस्य गोचरे वर्तमाना न जानामि कुतो न भस्मीभवामि, किमपरमवशिष्यते यदुद्दिश्य दैवमद्यापि न विरमति, न वियोजयति माममीभि-रश्मसारकठिनैरसुभिः, हा किमेतदापतितं मम मन्दभागिन्या राजिलभयभग्न-स्याजगरवदनविवरपतनम्, गोमायुत्रासापसृतस्य केसरिनिवासदरीप्रवेशः, नगशिख-रात् पततो महता कालाहिना दंशः, ग्राहगृहीतस्य शिरसि वज्रपातः, विषवेग-मूर्च्छितस्यारण्यकस्य दवानलवेष्टनं नाम। हन्त कुटिलगते कोपनद्विजिह्व! किमिद-माशिषा योजयन्नेव मां मूर्च्छयसि, प्रसीद भगवन्, विरम कोपात्, उपसंहर शापविष-मित्यभिदधती तस्य महामुनेः पादयोरपतम्। स तु निमील्योन्मील्य च लोचने सकरुणमिदमवादीत्—पुत्रि! न मे वागनृतमुदीरयति। दैवनिर्माणमेवेदृशम्; न निवर्त्तयितुमीश्महे शापमिदानीम्, अखिलमिदमुद्रर्कमधुरमाधास्यति विधिः, समा-धेहि तावदात्मानम्, आनन्दावसानानि महात्मनां व्यसनानि भवन्ति। वत्सः सुर-थोऽपि विश्वकर्मप्रेरितया काञ्चनया त्रयोदशयोजनान्यपवाहितोऽभिषेकमज्जनादिव तस्माद्व्यसनादुत्तीर्य त्वत्समागमाय व्यवस्यति। मा स्म तमनुतप्यथाः। त्वमपीतो दक्षिणेन गत्वा हाटकेश्वरसनाथसप्तगोदावरमासाद्य कियन्ति दिनानि गमि (मयि) ष्यसि। यदा त्वमिव तिस्रोऽपराः कन्यकास्त्वया सह समेष्यन्ति तदा सखीभ्यामपि संयोगमेष्यसि, स्मरिष्यसि च मामृतध्वजं नाम मुनिम्। अथाहमागत्य पत्या, प्रकृत्यापन्नेन पित्रा च त्वां योजयिष्यामीति मामाश्वास्य ततो नातिदूर-वर्तिनमाश्रममविशत्।

अहं तु तेन मुनिना यथा निर्दिष्टमध्वानमारुह्य दक्षिणां दिशं प्रति प्रति-ष्ठमाना व्यतीत्य गिरिद्रोणीकान्तारवर्त्मानि दक्षिणपूर्वेण त्रिगर्त्ताभीर-पल्लीप्रायेषु जनपदेषु वीवधवाहिबाहीकबहुलासु सरणिषु सेयमुत्तरगिरे-रागता गवां मङ्गलदेवतेति पूजिता पशुपालैः, यावनालप्रायेषु क्षेत्रेषु रक्ष विपिनमृगविलुप्यमानमस्मत्केदारमित्याराधिता सस्यगोपैः, गोकुलप्रायेषु ग्रामपरिसरेषु नवनीतोपायनेनापचितिमुपनीता शिशोर्नप्तुरनामयमिच्छद्भि-

जरद्गोपैः, आतपशुष्कगोमयपिण्डेन्धनपक्वप्रियङ्गुवलिभिर्रचिता पुत्रकामेनान्तर्वत्नीपतिना ग्रामप्रधानपुरुषेण, मुहूर्त्ताविर्भूतहासरसतिरोहितव्यसनसंवेदना बहूनि योजनानि सुखेनालङ्घयम्। अत्रान्तरे कुरुजाङ्गलमासाद्य दृषद्वतीसैकतेषु कूपिकाखातोपलभ्यानि सलिलान्याचम्य द्वैतकाम्यवने विलङ्घ्य अदितिवनमगाम्। तत्र पुत्रार्थमदितेर्देवमातुरतुलं तपस्समास्थितायाः प्रदक्षिणक्रमपदचिह्नराजिलाञ्छितोपकण्ठानि भगवतो भूतपतेरायतनानि वन्दमाना व्यचरम्। अथ सरस्वतीसलिललाक्षारसावसेकरक्तकुसुमस्तबकस्य विरहिजनरुधिरधौतकन्दर्पशरनिकरेषुधेरिव बीजपूरतरोरधोभूपृष्ठपतितपादावसक्थिकन्यस्तद्विगुणभुग्नसव्यबाहुलताकफोणिबन्धाम्, आतताङ्गुलिवामकरतलपर्यस्तधवलकपोलपालिम्, इतरेण करेण करजमुखलेखनीशिखरेण किमपि शून्यमवनावुल्लिखन्तीम्, अनवरतनिपतदमलबाष्पसलिलधारास्तिमिताधरीणार्धोरुकाम्, आयतश्वासपवनवेल्लनोद्धूतधरणिधूलिधोरणिमलिनजघननिवसनाम्, अनवरतविधुतमूर्द्धचपलकुण्डलप्रोतमणिमरीचिसूचिव्यधक्षतजोक्षणादिव ताम्रलोचनाम्, आवेगवेगस्फुरितसंतप्तवक्षस्तटस्फुटितहारमुक्तामणिशकलविप्रकीर्णाङ्कपालिम्, उत्सङ्गगृहीतविकचमल्लिकुसुमाञ्जलिमङ्गलेन प्रयास्यतः प्राणानिवानुमोदमानाम्, आनायबद्धमृगीमिव निःस्पन्दाम्, उत्कीर्णामिव, लिखितामिव, पाषाणपुत्रिकामिव, दारुणशालभञ्जिकामिव मन्दारिकामालोकयम्।

आलोकयन्त्या हा! प्रियसखीति मम तारमाक्रोशमाकर्ण्य चकितसप्रत्यभिज्ञोद्ग्रीववदनपुण्डरीका करुणहर्षसंभेदकूणितया दृशा मामवलोक्य ससंभ्रममुत्थाय मृदुलबाहुलताभ्यां कण्ठे गृहीत्वा तारतरं रुरोद। रुदितावसाने च स्वकरावचितमृदुलपल्लवासने मामुपावेशयत्। स्वयं तु भूमावुपविवेश प्रियसखी।

ततः प्रथममोहमारभ्य कुरुक्षेत्रप्रवेशपर्यन्तमात्मवृत्तमावेद्य किमिति मामकाण्डमूर्च्छितामपहाय युवां गते? क्व वा कालमनयतम्? कुतो वा तव कुरुजाङ्गले भ्रमणम्? किमारभते वा मन्दोदरी? इति सकौतुकविषादप्रणयकोपमेनामपृच्छम्। असौ तु दीर्घमुष्णं निःश्वस्य वामकरकनिष्ठामुखेनापमृज्य बाष्पबिन्दुमिदमुवाच—भर्तृदारिके! त्वयि तातशापेन मन्मथेन दैवेन वा मोहमुपनीतायाममर्त्यत्वसंभवदपि किमप्यमङ्गलमनुरागसुलभेन कार्पण्येन शशङ्किवहे, तदात्वसमुचितमावामिदमेव मेनिवहे यदुद्दलितदानवनिवहे भगवति मघोनि, कोपने पितरि, महामुनौ शौनके च वृत्तमेतन्निवेदयावः। ते तु यथोपायं प्रतिकरिष्यन्ति विपदमिति मनसिकृत्य प्रसरति शिशुधम्मिल्लवालधूसरे सायन्तनावतमसे तथाविधामेव त्वामत्यजाव। यावदत्रजाव शौनकस्याश्रमं तावदनेन कुलपतिना विसर्जिता दिविषदो दिवमुदपतन्। [illegible]

मुनिरिदमुपदिदेश—महाभाग पाकशासन! यथा रथाङ्गपाणिना दितिनन्दनो हिरण्यकशिपुरभिहतः, यथा च यूयमात्मपदे प्रतिष्ठापिताः, तत्सर्वमधिगतमेवायुष्मतः। स एव हिरण्याक्षाग्रजो विश्रवःकलत्रस्य गर्भं प्रविश्याविर्बभूवेति समाधिमयेन चक्षुषा पश्यामि। तं च महान्तमापतितं त्रैलोक्यविप्लवोत्पातमुपशमयितुं नास्ति वः शक्तिः। इदं तु मन्त्रबीजमायुष्मता ग्राहयामि। प्रकृतिकोपने विश्वकर्मणि न विश्वसिति किमपि भूतम्, अथ कथमपत्येष्वपि वीतकरुणे निसर्गदारुणे दारुतक्षणाजीवे मायाविनि कूटकर्मणि दैवतपिशाचेऽमुष्मिन् विश्रम्भमासादयन्तु स्त्रियः, विशेषतः पुरुषगुणदोषपरीक्षाविचक्षणा गणयोषितः। न च घृताचीगर्भसंभवं विबुधवार्द्धकेरपत्यमपहाय द्वितीयमस्ति वैश्रवणावग्रहग्रस्तस्य गीर्वाणवर्गसस्यकेदारस्य कारीरीशान्तिकमिति ब्रह्मवदनादश्रौषम्। तत्तथा करिष्यसि यथा त्वष्टरि तुष्टचित्तवृत्तिरप्सरसो घृताची मनसापि नान्यं पुमांसमाश्रयेत्, विषमपतितमपि, कापेयपारिप्लवदूषितमपि, देहान्तरगतमपि, पशुभावमूढमपि विश्वकर्माणं छायेव न त्यजेत्। आसन्ना हि विश्वकर्मपादपस्य क्रूरकर्मकुसुमफलानि विपद इति वचनविरामे महेन्द्रेण विमानमारोहताऽभिवादितो निवृत्य निजामासनवृषीं सिषेवे। परिवव्रुरेनमाम्नायसागरसोममन्तेवासिनक्षत्राणि। तत्रान्तरे तारमावयोः क्रन्दितमाकर्ण्य जातकरुणेनान्तःकरणेन प्रवेशय सदसि दारिकाद्वयमिति कमपि तेषामन्यतमं शिष्यमादिदेश कुलपतिः।

अथ सभाप्रविष्टयोरेव नौ वचनावसरमपच्छिद्य विदितवेदितव्यः कालत्रयदर्शी महर्षिरार्षेण चक्षुषा दृष्टमाशशंस—दुहितरौ! प्राणिति वां सखी चित्राङ्गदा, जीवति राजा सुरथः, किन्तु कियन्ति दिनानि युवयोर्नास्ति सख्या तया समागमः, न च तस्याः प्रियतमेनेति नातिवर्त्तितुं प्रभवति कोऽपि विधिनियोगम्। अतः प्रतिपालयतं समयमिति तस्य वचसि विश्वसन्त्यावपि तारल्यात्तं देशमगच्छाव यत्र परित्यक्तं तव शरीरम्।

आगत्यापि चन्द्रिकासु लीनामिव, कुमुदहासेषु मग्नामिव,कोककरुणकाकुभिर्द्रवीभूतामिव, हंसच्छदच्छविषु प्रोतामिव, मौनमुद्रितनलिनपुटगर्भितामिव, मलयवातधुतकैरवपरागपटलप्रविष्टामिव, घनीभवदवश्यायपङ्कान्तरितामिव, जातकरुणेन चन्द्रमसा करैरुत्क्षिप्याङ्कमारोपितामिव, तारागणोपमर्दननिर्दयेन तेजस्विनां प्रवरेण दुर्वाससःसोदरेण द्विजराजेन विजेतुमीहते मामाननरुचेति कोपात् पादप्रहारैर्भुवं प्रवेशितामिव, तातकोपानलभस्मभूतामङ्गचर्चाकर्मणि नियुक्तामिव, सोमचुम्बितोत्तमाङ्गेन व्योमरूपिणा विरूपाक्षेण चन्द्रकान्तद्रवप्रवाहापवाहितामिव, लवशो मदनशरैर्निकृत्तामिव, चारित्रलङ्घनलज्जाविलीनामिव तत्र भवतीं नापश्याव।

ततो मन्दोदरी त्वां विचेतुमस्मान्नैमिषाद्दक्षिणपूर्वेण वर्त्मना प्रविष्टा

पञ्चालान्, अहं तु पश्चिमोत्तरेण महतीं हिमगिरेरुपत्यकाटवीमटन्ती हा हन्त! इति मुहुररटम्। तत्र कुररीमिव मां हा प्रियसखीति क्रोशन्तीमापन्नाभ्युपपत्तिनिमित्तेन मत्तकलहंसकण्ठरवानुकारिणा स्वरेण बभाषे निष्टप्तचामीकरकण्ठसूत्रसौदामिनीदामसुन्दरमुदिरमेदुरशरीरो दिव्यलक्षणः पुरुषः—"वासु! मन्दारिकासीति जानामि। वत्से! कथयामि तव सख्याश्चित्राङ्गदायाः प्रवृत्तिम्, अवधेहि—कदाचिदहमिदानीमिव गन्धमादनादागत्य वनविहरणकौतुकाकृष्टो महतीमिमामटवीमटन्नतिनिर्भरमूर्च्छान्धकारमीलितनयनपुण्डरीकां चित्राङ्गदामालोक्य दुकूलपल्लवानिलेन वीजयित्वा चेतनामलम्भयम्, अलं भयेनेत्यसकृदाश्वासयञ्च। दर्शनात्प्रभृत्येव तस्यामवर्द्धत मम दुहितरीव वत्सलो भावः। सा हि मम तनयां मदयन्तीमभिनवेन वयसा, लोकलोचनसुभगेन लावण्येन, विश्वातिशायिना शीलेन चानुकरोति। तामितः पश्चिमेन वर्त्मना श्रीकण्ठं प्रति प्राहिणवम्। अनन्तरमगामनन्तरत्नाकरमगं गन्धमादनम्।

तत्र विमनायमानमिव मामालोक्य बालदशासुलभाभिनिवेशवशंवदा वत्सा मदयन्ती निर्बन्धशतेन मां मुहुर्मुहुरनुयुज्य मन्मुखादधिगतसकलचित्राङ्गदावृत्तान्ता मदधिकमदूयत। मिहिरमणिशिलेव कथञ्चिदतिमलिनमूर्त्तिर्मित्रव्यसनविधुरा क्षपामक्षपयत्। प्रातरारभ्य कुतश्चिदाविर्भवन्तमशीतलोपचारपरिहार्यमुदवहत संज्वरम्। अप्रतिकारदारुणपरितापगृहीता च मामब्रवीत्—तात! नानवसितव्यसनायां चित्राङ्गदायामात्मनो गृहनिवासमभिरोचये। शापितोऽसि मम जीवितेन यदि न मां नयसि तत्र, यत्र व्यसनदिनानि तक्षनाथनन्दना गमयति। श्रवणादेव बद्धमस्यां मम सौहृदम्, वर्द्धय दर्शनानन्देनेति तस्या दृढतरमनिवार्यं निर्बन्धमधिगत्य चित्राङ्गदां विचेतुमृतध्वजस्याश्रममन्वधावम्। तत्र तेन मुनिना निवेदितां कुरुजाङ्गलमार्गेण सप्तगोदावरं गत्वा तत्र समयमनुपालयिष्यन्तीमेनामवधार्य दुहितरि मदयन्त्यामिममुदन्तमावेदयितुमनेन वर्त्मना प्रतिनिवृत्य निजमावासमचलम्। गन्धमादनं गच्छन्नायुष्मतीं त्वामद्राक्षम्। त्वमप्यनेन वर्त्मना गच्छ त्वरितमलङ्घितकुरुजनपदामेव क्वचिदासादयिष्यसि चित्राङ्गदाम्। अभिधास्यसि मद्वचसा कल्याणिनीम्—अञ्जनो नाम गुह्यकराजस्त्वामायुषा सौभगेन चाभिवर्द्धयति, तत्तनया मदयन्ती दत्तकण्ठग्रहा शपथशतेन त्वामर्थयते—भगिनि! प्रतिपालयिष्यसि मदागमनं सप्तगोदावरे यावदहमागत्य संविभजामि तव नयनवारिधाराम् इत्येवं गुह्यकपतेर्वचनमाकर्ण्य प्रणिपत्य तं महात्मानं नैर्ऋतीमभिप्रतिष्ठमाना कतिपयेन कालेनामुं देशमासाद्य श्रमविषादाभ्यामभिभूताऽस्य बीजपूरतरोर्मूलमाश्रित्योपाविशम्।

अथ त्वमासीर्नयनविषय इति मन्दारिकावृत्तमाकर्ण्य (सा) स्रमिदमवादिषम्—सहचरि! धिगस्तु मम जन्म, कलङ्कितो मया निसर्गमलिनया भूच्छाययेव

विमलो वंशशिशिरांशुः, महाजननयनदूषिकया प्रत्यबध्यत पित्रोः परमुखावलोकनम्, खललोककुमुदहासनतमस्विन्या निमीलितानवतमन्ववन्धि वान्धववदननलिनवनम्, अकालप्रगल्भया कौमारचारित्रकौमुदीकालिकयोदपादि विषमविषम्, अभिजातचरितचन्द्रोदयकुहूप्रान्तलिप्तया लिप्तमयशोऽन्धतमसमसीभिरशेषविश्वम्। एवंविधा संक्रामयामि प्रकृतिस्वच्छेषु स्वव्यसनबिम्बम्। पश्य गुह्यकराजेनाञ्जनेन, मुनिना सत्यध्वजेन, प्रियसख्या त्वया मन्दोदर्या मदयन्त्या च यथा यथा संविभज्य स्वीक्रियते तथा तथा मयि गुरुरेव भवति व्यसनभारः, न खल्वितरेणैधसा प्रतिगृहीतोऽपि मूलमिन्धनमदग्ध्वा विरमत्याश्रयाशः, प्रत्युतैधानां संभेदमासाद्य भूयसा वर्द्धते।

भगिनि मन्दारिके! यावदसौ मद्व्यसनपावकसमिन्धनसमिद्भावं नोपैति निष्कारणप्रणयपरतन्त्रा प्रियसखी मदयन्ती तावदेव त्यजेयमतिनृशंसान् प्राणान्, पातयेयमस्मात्तरुशिखरात् सरस्वत्यामात्मानम्, अनुमन्यतामेनमावसानिकमभियोगम् आजन्मनो मम मनोनुकूलव्यवसाया सहचरी। यदि कदाचिदासाद्येत दैवात् त्वया स सुभगस्तदा तस्य पुरः प्रकृतिचपलेति, स्वतन्त्रेति, न विधेया मातुरिति, न दक्षिणा पितरीति, न स्निग्धा सहचरीष्विति, कोऽस्याः स्वजनविद्विषः प्रेयानिति? कस्येयमाशयानुरूपचेष्टितेति? प्रथममसन्ति वा मम दोषशतानि ख्यापयिष्यसि, ततः शिथिलतामिवापद्यमाने तस्य निर्भरानुरागे बन्धुभिरवधीरिता केनोपायेन जीवतु, तत्याज सरस्वत्यामात्मानमित्यनादृत्य ममेममुदन्तमावसानिकमावेदयिष्यसि। तव विरहोऽस्या निधनस्य कारणमिति कथयित्वा स्वप्नेऽपि विषादवैलक्ष्याभ्याममुं महाभागं न योजयिष्यसि। तथा हि सति कदाचिदसावात्मनः शरीरे निर्विद्येत, प्राणेषु वा विरज्येत, मङ्गलेतरत्र व्यवसाये वा प्रसज्येत। यथा च तस्य मयि विद्येत प्रणयलवः, न हीयेत सर्वथा ममता, नापचीयेत दुर्जनगणनेष्वपि स्मरणम्, तथा त्वमेव जानासि विधातुम्। इदानीं काऽहमुपदेशदानेन प्रगल्भितुम्।

यदि चाद्यापि मन्दोदरी मद्व्यसनगृहीता न त्यजति तनुम्, आपतिष्यति वा तव नयनगोचरे तदा बलात्तामनिच्छन्तीमपि नेष्यसि बान्धवसमाजम्, अनुरूपेण वरेण पितृभ्यां प्रतिग्राहितमात्मनो मन्दोदर्याश्च वपुरुपनेष्यसि पतिव्रतग्रहणेन कृतार्थताम्। अयि मदेकजीविते! परं लोकमुपगताया मम प्रियकामानि युवयोरपत्यानि मामुद्दिश्य निवापसलिलमावर्ज्जयेयुः, एतावतापि मम जन्मलाभकुसुमस्य फलमुपपादितं भवेत्। अभिवन्दिष्यसे मन्मयी भूत्वा गुह्यकराजस्य चरणौ, निवेदयिष्यसि लोकान्तरप्रस्थितया मया सन्दिष्टमस्मै सर्वभूतानुकम्पामयाय परमार्थपित्रे–तात! त्वयि वरमदिवत्राङ्कदायाः

प्रणामाञ्जलिः। यदि कदापि मध्यमे वयसि स्थिता मदयन्ती मनसा नयनेन कर्मणा वा भजेत् तरलतां तदापि स्मृत्वा मम व्यसनमन्तिमप्रार्थनवचनं च प्राकृत इव न क्रोधस्य वशमीया इति। मदयन्त्यपि चित्राङ्गदाचरितनाटकस्य निर्वहणमिदमावेद्य बोधनीया मा कदाचिदापरिणयात् पितरमानिधनात् पतिमवमत्था (मंस्था) इति। मया विना कृतेति त्वया दुर्दर्शामपि मन्निर्बन्धादपत्यवत्सलामम्बामाश्वासयितुमेकदा गमिष्यस्यमरावतीम्। अयि चतुरे! मा कदापि कोपनस्य तातस्य नयनपथमवतारैः (रीः), अवतीर्णापि च न मम नामाभिधाय नैमिषवृत्तं स्मारयिष्यसि, कदाचिदतिनृशंसप्रकृतिरनुशयेन पुनः शापमुत्सृज्य जन्मान्तरेऽपि मम दयितदर्शनमन्तरयेत्।

अथ गत्वा कुमारीभवनोपवनमनेन मदभिनीतेनाशिषां शतेन योजयिष्यसि त्वया मया च तनयनिर्विशेषमात्मकरोपनीतकलशावर्ज्जनेन वर्द्धितं कुलपोतकम्—जातजीव! न कदाचिदनया सुभगया माधवीलतया वियुज्यस्वेति। सानुनयमुपसृत्याकालकोरकितमर्थयिष्यसे रक्ताशोकम्—वत्स! न गणय चरणप्रहारापराधान्, अनुमन्यस्व चरममभियोगं चित्राङ्गदायाः, न कदापि शाखाभुजवेल्लनेन मालतीलतालिङ्गनं विघटयेरिति। स्मरसि तं पूगतरुमद्यापि न निर्भरमालिङ्गति सततमायासयति मातरमुपवनपालीम्, गुरुगणकोपाय केवलमभिमुखीकृतापि विमुखमञ्चति स्वभाववामा प्रकृतिकुटिला नागलता। तामपि चित्राङ्गदाचरितोपसंहारनिदर्शनबिभीषिकया तर्ज्जयिष्यसि। किमन्यदथवा त्वयि मियोक्तव्यं न विद्यते मम किमपीतरदाशासनीयम्। केवलमाख्यापयिष्यसि कथकैः, प्रबन्धयिष्यसि कविभिः, आशासयिष्यसि विप्रैः, वरयिष्यसि देवैः, निश्चेष्यसि मनसा, संकल्पयिष्यसि मनोरथैः, प्रहेलिकासु गूहयिष्यसि कुमारीभिः, चित्रकर्मणि लिखिष्यसि धातुरागैः, पाठयिष्यसि शुकैः, घोषयिष्यसि सारिकाभिः, अभिनाययिष्यसि नटैः, निबन्धयिष्यसीतिहासकैः, घटयिष्यसि तक्षभिः, प्रयोजयिष्यसि पाञ्चालीमिथुनसंघटनानुकरणैः, गापयिष्यसि गन्धर्वैः, स्थापयिष्यसि पाषाणप्रतिमामयीमायतनेषु स्थपतिभिर्जन्मान्तरेऽपि सुरथेन सहावश्यसंगतां चित्राङ्गदामिति मम वचसा सहैव मन्दारिकाया व्यरमच्चेतना, मम नयनोदबिन्दुभिः समं निपपात भूतले तनुलता, मम विधिना सार्द्धं पर्यवर्तत तारका, मम जीविताशया साकमलुप्यन्तोच्छ्वासा इति।

अत्रान्तरे किमप्यविचार्य पश्य चित्राङ्गदे! द्वितीयं मित्रवैशसम्, अरे! जीवितकातरे! कियन्ति व्यसनानि न द्रक्ष्यसीत्यात्मानमुपालभ्य त्वरिततरममुष्य बीजपूरतरोः शिखरमारुह्य सरस्वत्यामपतम्।

अथ तत्र पातालोदरगभीरे सरस्वतीस्रोतसि तुङ्गपदात् पतन्ती दूरममज्जम्। उन्मज्जनारम्भे तु विश्वकर्म्मकराकर्षणतरलरश्मिचक्रवालेन शाणचक्रभ्रमितप्रभातमार्तण्डमण्डलेनेव सलिलविवर्त्तेन मुहूर्त्तमावर्तिता महारजनरागरञ्जितगुणशिक्ययन्त्रभ्रमणिकाविक्षिप्तेव पाषाणपिण्डिका तिर्यगधावम्।अत्रातिविस्मिता निसर्गादेव निमेषसुखवञ्चितेन चक्षुषा किमपि चित्रमन्वभूवम्। अस्ति तावददितिवनपरिसरसरस्वतीप्रवाहसलिलावर्त्तपिहितद्वारम्, उन्मिषन्मणिमरीचिचक्रचुम्बिताग्रमिव कर्कोटककण्ठोदरकुहरम्, आयतेनाव्यक्तेन रक्तेन विषमवलितगतिना स्रोतसा विद्वा (द्धा) न्धतमसस्थानसन्तानम्, अन्त्रसूत्रग्रथितयुगान्तयोगनिद्रान्धकारमिव नारायणजठरविवरम्,अलक्ष्यकुटिलया ताम्रया वारिधारया विदारितशिलाफलकम्, अन्तःप्रविष्टनरकेसरिकरजपाटितवक्षःकपाटमिव हिरण्यकशिपुवपुः, एकगव्यूतिविस्तीर्णम्, अनेकयोजनायतमवनिगर्भवर्त्म। तत्र पथि (ति)तेन कुटिलेनाव्यक्तगतिना तीव्रेण सरस्वतीस्रोतसा विधिना च प्रेरिता परतन्त्रा कियन्ति योजनान्यलङ्घयमिति कथं जानीयाम्। केवलममुना किसलयताम्रेणार्तवरजोरक्तधरणिगर्भजरायुनाडीतन्तुनेव गूढेन सरस्वतीपूरेणापवाहिता कज्जलाचलदरीसोदरमपरं प्रवाहमासाद्य प्राभातिकप्रभाकरकरपरम्पराप्रेरितामपरद्वीपान्धकारप्रविष्टां विभावरीमन्वकरवमिति स्मरामि। तस्य महतो मधुकरमालाश्यामलस्य प्रवाहस्योच्छ्वासेन दूरमुत्क्षिप्य तीरसैकते निक्षिप्ता मत्तकरिकरदण्डापविद्धेव पद्मिनी ज्यानिमभजम्।

अनन्तरमविरललतातन्तुसन्तानप्रोतपाटीरविपिनकुथापचा (वा) रितविग्रहस्यानेकनदीप्रवाहप्रग्रहोपग्रहदृढावनद्धकटकोपलकूटपर्याणविषमपृष्ठस्य मलयालानावलम्बिवेलातमालवनवीथिलोहशृङ्खलाबद्धस्य गभीरकन्दरावदनकुहरविनिर्गतवरयोश्शिलासंघातस्खलनेन द्वेधा प्रसृप्तयोः प्रस्रवणदन्तयोरन्तराले दीर्घसर्जद्रुमशुण्डारदण्डमुद्वेल्लयतः सह्यगिरिकुञ्जरस्य लोलदेलावल्लिपल्लवप्रतानसिन्दूरपुञ्जगुञ्जदभ्रमधुकरनिकरचुम्बिताद् गण्डपाषाणमण्डलाद्विगलितां मदलेखामिव, सप्तधा प्रतिद्वीपव्यूहितविग्रहस्य पत्युरर्णवस्य परिग्रहोचितैरिव, सप्तानां पुराणब्रह्मणां मरीचिप्रमुखाणामभिषवाय पृथगवस्थितैरिव, भगवता कुम्भसंभवेन सप्त सरस्वतो निपीय विभज्योद्वान्तैरिव, आसन्नतरागस्त्याग्र (श्र) मवटूनामुद्गीथेषु विवृतमवस्थितान् सप्तस्वरानाकर्णयितुमुद्गृहीतनानातनुभिरिव सप्तभिः प्रवाहैः पूतसप्तान्तरीपाम्, आदित्यार्घकुसुमपुटकसंयमनलतातन्तुपाशावसक्तशृङ्गाङ्कुरेण हरिणपोतेन करयुगलगृहीतकरकेण नरेणेव चरणाभ्याममग्रे धावता जरद्वानरेण निजविषाणाङ्कुरोत्खातमृद्भारभरितवल्कलगोणीवह-

स्कन्धेन मण्डलितपुष्कराग्रोत्क्षेपधृतस्नानीयचीरेण कलरववल्गुवल्गता कलभकेन कुशमुष्टिनहनग्रन्थिलकेसरेण केसरिकिशोरकेण विषाणस्वस्तिकग्रथितगोमयपिण्डेन कासरशिशुना च सम्बाधगमनमार्गया भगवत्या लोपामुद्रया प्रतिदिनमाश्रमादागत्यावगाह्य पवित्रीकृतां गोदावरीमपश्यम् । अचिन्तयञ्च—नूनमिदं तदेव ऋतध्वजेन मुनिना निर्दिष्टं सप्तगोदावरं तीर्थम् । अत्र हि सप्तस्रोता गोदावरी दृश्यते । सर्वथा नास्ति मम मन्दभागिन्या मरणमहोत्सवः, अन्यथा ममापरथैव कथं विधेर्व्यवसितम् ? क्व सरस्वत्यां मरणाय प्राविशम्? क्व चात्र सप्तगोदावरे स्तोकमप्यखण्डितेन शरीरेण निरगाम् ? तद्भवतु निष्प्रतिकारदारुणे दैवव्यसने महामुनिवचनानुसारि किमपि व्यवस्येयम् । अस्य तीर्थस्य तटे विचिन्वानि हाटकेश्वरमित्युदतिष्ठम् । उत्थाय तु शिखरशूलसूचिविद्धनक्षत्रमौक्तिकप्रकरमावर्जितकनककलशभास्वरस्फटिकशिलाघटितकूटमनुबिम्वसंक्रान्तबालमार्तण्डमण्डलाभिमण्डितशिखरमिव रजताचलमुत्सङ्गनिविष्टशङ्करशरीरप्रभाभिरिवोज्ज्वलं मठम्, अस्य गर्भे च गर्भस्य (भर्गस्य) लिङ्गमालोकयम् । अयमेव स हाटकेश्वरो यस्य समीपे मम निवासमादिदेश भगवानृतध्वजो मुनिरिति मनसा निश्चित्य तस्य नीललोहितायतनस्य पश्चिमप्रकोष्ठशालायामात्मनो दिवसयापनमरोचयम् ।

तत्र सती कतिचिदतिचिरविरहकातरेण तारुण्यघूर्णदलसतारकेण स्फुरिततरलत्रिभागलङ्घितकपोलपालिना प्रमदसंभिन्नमन्दाक्षमीलितोन्मीलितपक्ष्मकूणितकटाक्षेण केनाप्यन्तर्मुखेन चक्षुषा संकल्पकल्पितदयितवदनारविन्ददर्शनानन्दैः, कतिचन ससंभ्रममुत्थाय मायामयपरिजनहस्तावलम्बनिरपेक्षमावेगविधुतकरपल्लवमभिधावन्ती मत्तदन्तिकटतटकठोरमसृणमांसलसुभगस्कन्धपीठरोमाञ्चसूचिस्यूतया मृदितमृणालमृदुलया बाहुलतया विभ्रमार्पितप्रियतमकण्ठस्य द्विगुणवेष्टनेन, कानिचिदकाण्डमनोरथरथारोहणोपनतस्य तस्य जनस्य चिरतरान्तरातिथेरुपचरणेन, कानिचन चरणमूललुठदलिकमिलदलिकालालककलापेन श्वासवेल्लदलीकनासिकानालीकेन तेनासत्येन नासत्यरूपगर्वसर्वङ्कषेण विदर्भविश्वम्भरासार्वभौमेणानेकचाटुचटुलया वाचा विनोदितैर्गगनलतासगर्भसहचरीजनोपालम्भवचनसहस्रेणाप्यनल्पप्राणैः प्रणयकोपैः, कियन्ति तु शयकिसलयपुटोपरोधविघटितनीविमोचनव्यापृतप्रणयिपाणिना पुनरतिरतिरभसप्रसृतकान्तकरसाहसाकृष्टनिवसनेन व्रीडावेपितोरुदण्डावसवियक्थिकावृतजघनेन घनघटितबाहुवल्लिस्वस्तिकापहस्तितस्तनमुकुलोद्गमेन वल्लभदशनदंशसीत्कृताधरविधुतमूर्द्धवर्द्धमानमकरध्वजेन खलगिरासमोचरेण निर्वर्ण्यमानचारुणा गुरु-

त्रपापारतन्त्र्यपरिहृतेन परिजनोत्सारणायासरहितेन सखीजनसाचिस्मितसूचनातिवृत्तरहस्येन, न पितृशापभयस्याविषयेण, न निष्ठ्यूतव्यसनविषेण, न विषण्णबन्धुजनेन, न नखक्षतव्यथितवक्षसा, न कौमारव्रतहरेण, न परिणतिविरसेनानपेक्षितबहुविधोपकरणेन, केवलमाशया यथाकाममुपनीतेनोत्प्रेक्षाभिवीक्षितनायकसमागमेन, तदितराणि स सुभगः कं देशमलङ्करोति ? किं व्यवस्यति ? कदाऽवलोकयिष्यामि तस्य वदनम् ? आर्षेण चक्षुषा निरैक्षत स महर्षिः, मत्संगमाय व्यवस्यति स सुगृहीतनामा सुभग इति, हन्त कालत्रयदर्शी भगवानृतध्वजोऽनृतां वाचमुदैरयदिति कथमाशङ्के ? न च पश्यामि तास्तिस्रः कन्यकाः, यासां दर्शनं मम व्यसनस्यावधिरिति द्विजपतिरादिदेश, कथं च तेन महारथेनानेकपृतनापतिना विदर्भासन्नापीयमवनिरद्यापि न विचिता ? न च मदयन्तीसंदिष्टमृषिप्रवरादिष्टं च सप्तगोदावरे समयानुपालनमपहाय स्वयमेव विदर्भानभिसर्तुमर्हति व्यसनविप्लुता मादृशी, प्रतिकूलविधिपाशबद्धा हि यथा यथात्मानमुन्मोचयितुमारभन्ते तथा तथा दृढीभवन्ति विपद्ग्रन्थय इति मयैव गृहीतान्वयं कथं व्यभिचरति ? हा किमेतदापतितम् । मम मन्दभागिन्याः कृते मन्दारिकापि तत्याज जीवितम्, व्यभिचचार भगवतो मुनेः सखीसंगमवचननिगमः, किं वा मामिव, नैमिषे प्रियसखीमप्यदितिवने मोह एवाविवेश मन्दारिकाम् ? अहं विधिवश्या मुहूर्तमपि नान्वपालयम्, अधुना न जानामि कुत्र भ्रमति ? न वेद्मि कया गत्या कं देशमटति मन्दोदरी, किमारभते तातो गुह्यकपतिः, किमिति विलम्बते मदयन्ती ? संदिदेश हि मन्दारिकामुखेन मदागमनमनुपालयिष्यसीति, कस्मादिदममर्त्येष्वपतितपूर्वमस्मिन्नेव जने पपात दैववज्रम् ? कस्य हेतोरद्यापि न व्यरंसीत्तातस्य कोपः? येन मामुपेक्षते, कस्मिन्नप्यन्यस्मिन्नपत्ये मयीव नासीदस्य वत्सलो भावः, किं करोमि ? को विपत्प्रतिकारः ? न ममोत्साहमध्यवस्यति हृदयम्? केन सह मन्त्रये ? नास्त्यत्र महति विपिने कस्यापि प्राणिनः संचारः, कस्मै निवेद्य स (सं) विभजामि हृदयशल्यम्? अद्यापि नेदं वनमाससाद मदयन्तीस्यायतेरतीतस्य च चिन्तया श्वसितैकशरणा दैवोपालम्भमात्रव्यवसाया बाष्पपातेतरविपत्प्रतीकारमुषितरणरणका, अनन्यसहाया वेदनयैव केवलं सहचरिता कथं कथमपि दिनान्यत्यवाहयम् ।

एकदा तु तरतु चित्राङ्गदा व्यसनमिति संकल्प्य महाभैरवं हाटकेश्वरमुपासितुं कापालिकव्रतमधत्त ममावुत्तो विवस्वान् । तथा हि—यथार्थमित्रव्यपदेशो निजेषु वसुषु गिरितरुशिखरेषु स्वस्मिन् वाऽरिषु वा तुल्यमेव रागमुदवहत्, उन्मदचकोरचक्षुःपुटपाटलिमविडम्बनमम्बरखण्डमवलम्बे मम तातेन रचितास्वित्युपाहस्यत, नयनविभ्रमजनकजनकजनकरणदोषा-

ध्यस्ततिरोभावाविर्भावपतनारोहणतेजोह्रासवृद्ध्यादिविकारम्, तत्त्वतः प्रकाशस्वरूपम्, आकरमन्यत्र सर्वत्र संक्रामितानामाभासभासाम्, इतररागेण रागिणमिवोपलभ्यमानम्, अखिलसंसारकुक्षिभ्रमणेऽप्यनवाप्तखेदसंपर्कम्, अशेषलोकवृत्तसाक्षिणम्,अक्षीणगोप्रसारसंहारशक्तिम्,अखिलत्रयीरहस्यतत्त्वभूतमात्मानं जानन् वारुणीमुपयुज्याधःपतिष्यामीति नागणयत्, वलिभावव्यपेतप्रतीकारचिन्तामयपशुपाशगृहीतविग्रहाणां प्राणिनां मृत्योर्जनको न तद्बाध्यतामात्मनः शशाङ्के, शशाङ्कच्छेदसोदरेण रणदलितमालतीकुसुमदामपूजितेन करयन्त्रविदलनविकचतया समुद्गकैकतरखण्डद्युतिमावहता समेन वनरुहां कपालिकाभागेन मधुद्रवमुपभुज्यारज्यत, सप्तापिहितमण्डलानुवाहास्तम्, अस्तविभागके शनिग्रहैकतातमावहन्नाकपिलद्युतिः, अतिमात्रमुदवहत विश्वप्रपञ्चचक्रभ्रमणोपनीतश्रमम्, अरोचयन्नगमूले निपत्य भूमिविवरे प्रविश्य वा निशायापनम्, आत्मनस्तिरस्करणसिद्धये द्वीपान्तरभ्रमणाय च करगृहीतैरञ्जनैरञ्जयामास लोचनम्, येन किं गगनमार्गेणोत्पतति ? किमर्णवं प्रविशति ? किं कुलाचलेन तिरोधीयते ? किमवनितलमासादयति? किमिदमकस्मादस्माकमीक्षणपथमतिवर्त्य वर्त्तत इति विस्मयस्तिमिततारकैर्नरैर्न निरचीयतेत्येवमरविन्दकपालचषकमधुमदेनेव ताम्रतामुपनीते, दिवसवलिपशुविशसनासृजेव सन्ध्यारागेण तर्पयित्वा महानटं नटयति धूर्जटिमस्तमस्तकधातुरागकषायमश्व (म्ब) रखण्डमवलम्बमाने पुनर्वारुणीपरिचयातिशयात्तदपि त्यक्ता (क्त्वा) परिभ्रम्य पतति सायन्तनधरणिधूलिधाराचिताभसितधूसरे करपरिवर्तितनक्षत्रनरास्थिशकलाक्षास्रजि व्रजति क्षणाददृश्यतामंशुमालिकापालिके, मदकलकलविङ्ककोलाहलानुपतदुकू (लू) ककुलकलकलाकलनविकलमौकुलिकलापाधिष्ठितेषु कुलायेषु, कालकुलालेन चन्द्रमण्डलघटघटनाय घट्टिते प्रत्यक्षमभितो भ्रमति ज्योतिषां चक्रे, चक्रवाककुलकरुणकाकुवाक्समाकर्णनमीलन्नलिनलोचनगलदलिबाष्पबिन्दुव्रजासु सरोजिनीषु, वीतवसौ रुचिनायके मुखरागमपि त्यजन्त्यां वारजन्यामिव रजन्याम्, अन्धकारमहार्णवे ममज्ज विश्वम् ।

अथ हाटकनायकायतनाभ्यर्णपितृवनवाटे महान्तमुन्मथ्यमानजलनिधिध्वनिघोरणेरनुकारिणं कलकलं कर्णेनाकर्ण्य किमिदमिति कौतुकात्तमेव देशमभ्युदचलम् । अथोरसा प्रेरयन्तीव,बाहुना तरभीय (न्तीव),कुचकलशावष्टम्फे (म्भे) न प्लवमानेव, चिरादपरिमार्जनप्रवृद्धैः करजशिखरैर्विदार्य प्रविशन्तीव, कथमपि च घनीभूतसलिलराशिमुल्लङ्घ्य जरठकपोतपक्षपालिधूसरस्य चिताधूम्याविवर्त्तस्य लोचनत्वचा निरूपणीयमुच्छ्वसितकपिक (रज) क्रो (क्षो) दतीक्ष्णं स्पर्शम्, अवरुद्धनिः (श्वास)

शुष्कतालुमव(य)मृष्टरसोनविस्रं च गन्धमनुभूय केवलमुत्तालवेतालकलकलदत्तकर्णा बलादन्वधावम्।

अथामुत्र योजनायते सूचिभेद्यसन्तमसन्तते पितृविपिनवाटे लवणोदवेलानिवासिनीरिवौर्वशिखाः, कालिन्दीसलिलनिलीना इव कालियफणामणीनामर्चिषः, कज्जलाचलतमालकुञ्जज्वलिता इवौषधीः, कालरात्रिकुन्तलकलापप्रसाधनीरिव चम्पकदामद्युतीः, कल्पावसानक्षपान्धतमसोदित्वरीरिव महाललाटलोचनत्विषः, महाकालवदनान्तरालप्रसृत्वरीरिव कोपकपिलकटाक्षकान्तिच्छटाः, प्रलयप्रगल्भमानपुष्करावर्तकगर्भविवर्तपतिता इव पिण्डितमार्तण्डकरदण्डमण्डलकडारास्तडितः, तिमिरार्णवपुञ्जितप्रतिबिम्बा इवोडूः, आगामिदिवसभीततमस्विनीहृदयस्येव सन्तप्तशल्यसूचीः, अवीचिनरकमलवीचीरिव नरकपालवेल्लनध्वनिताः, पाण्डवानुगृहीतवीतिहोत्रहेतिप्लुष्यमाणखाण्डववनवीथीरिव प्राणिवसाविस्रगन्धिधूमधारामलीमसा लोकाः, कलिलोकपरिषद इव वञ्चकवहुलाः, नन्दव्रजावनीरिव पूतनाधिवासभीषितपशुजनाः, एकचक्रापर्यन्ताटवीरिव बहुतरक्षुद्रसत्त्वग्रसनप्रमत्तबकप्राणविशसनतृप्तवृकोदरकिलकिलाकुलाः,विराटपुरनिलीनकौन्तेयकथा इव पाषाणपृष्ठपीठनिष्पेषस्फुटिक(त)कीचकग्रन्थिनिर्घोषचकितकङ्कवेपितबृहन्नलोल्लासनदुर्द्धर्षभीमास्फोटपरिसराः, प्रमथासुरसमरवार्ता इव परितः प्रनृत्यदन्धकारातिभैरवाः, धर्मप्रवृत्तीरिव पुण्यजनहर्षजननीः, काश्चिद्भस्मावशेषाः, काश्चन ज्वलिताङ्गारदीप्रकल्पाः, कतिचिदचिरज्वलितपावकावलिह्यमानकुणपासृजः, कतिचन पिशाचकरपरिवर्तनभृष्टरोमत्वरितापसारितशवाः, कियतीरपि कुपितभूतमुष्टिघातदलिततालुगलितस्वादुमेदोव्ययविषण्णक्रव्यादकुटुम्बिनीः, कत्यपि बलवदुल्कामुखाच्छेदत्रस्तरात्रिञ्चरकुमारकवलितनिष्ठ्यूतार्द्धदग्धनरशिरसः, तदितरास्तु परिपाकमधुरमांसपिण्डोत्क्षेपधावदुत्तालहस्ततालजङ्घजङ्घाप्रकाण्डपथत्वरितारूढनिशाचरकुमारचक्रक्रीडाः सहासयक्षवृद्धाः, ततोऽन्याः सिद्धकापालिकहूयमानसिद्धार्थसार्थचटच्चटाकटुगन्धोद्वेजितगुह्यकमिथुनाः, तदपराः प्रदक्षिणक्रमणव्यग्रडाकिनीडमरुडिमडिमाडम्बरडामराः, तदेकतमाः सततपतद्भृज्यमानसुलभशलभधानाप्रस्थचर्वणस्वस्थव्रा(या)तुधानजरतीनिषेविताः, तदन्यतमाः प्रमथकरोपह्रियमाणास्थिभस्मनश्चिता व्यलोकयम्।

तस्य चैवंविधस्य ज्वलतश्चिताचक्रस्यान्तरालचत्वरे तत्कालोत्कृत्तनरकृत्तिकोमलासननिषण्णम्, आस्तीर्णकरङ्कपञ्जरास्थिसंचयस्थालीधवलपुरोभागम्, आसन्नैरलब्धस्त्यानविरलबालपरेतपिशितरसभरितैरखण्डकङ्कालमुण्डकमण्डलुभिरशून्यवामावकाशम्, आमपलपिण्डपरिवेषणव्यग्रकिङ्करकलत्रनिरीक्ष्यमाणा-

ननम्, अनतिशिथिलतालुभेदोद्रवमदिरापरिपूरितकपालचषकास्वादमीलित-नयनम्, असरलदशनदण्डमण्डलगृहीतस्थूलास्थिगर्भासृगाकर्षणचूङ्कृताधरम्, आयतदन्तसन्धिसम्मितनरोरुनलककीकसावघट्टनचपललम्बमानरसनम्, अमर-योनीनां कदम्बकगोष्ठीबन्धमपश्यम्।

अस्य मध्ये परिचरणव्यापारचटुलकरचरणानां च किङ्कराणामरे खरनखरे! कन्दराननस्योपहरस्वाममेव नरशिरः, न रोचतेऽमुष्मै पाकविरसोऽभ्यवहारः, मुसलदशने! कचोल्लुञ्चनव्यसनिनी विलम्बसे, केशेषु गृहीत्वा क्षिप, वज्रदन्ते! न चर्वणीयं मनुजमुण्डम्, ऊर्ध्वकेशि! त्वचमुत्कृत्य विरसयसि, मांसमासादय कुण्डोदरस्याखण्डमेव कुणपम्, अस्थिमेखले! फूत्कृत्य निर्वापयसि चितोपकण्ठसंचितानि मेदांसि, न स्वदते सूचीमुखाय शीतलो रसः, सूर्पकर्णे! कर्णव्यजनवातेन वीजय कालकण्ठम्, उद्वेजयत्येनमत्र प्रत्यग्रमृतकाय-निगरणायासः, हिंसाजीवे! वीतप्राणभूताशनकुण्ठितरसज्ञस्य केकराक्षस्य रुचये जीवन्तमानय कमपि जन्तुम्, उद्धर्षिणि! न पर्याप्यते गोष्ठीतृप्तये स्तोकः पललराशिः, आनय गोदावरीजलादटवीगर्भाच्च तिरश्चां गणम्, नामुष्मिन्नरण्ये मानुषमासादयिष्यसीति त्वरिततरमुच्चारयतां कोलाहलं कर्णगोचरमकरवम्।

अत्रान्तरे तस्य महतः पुण्यजनसमाजस्य मध्यमासाद्येदमघोषयम्—अत्र भवतां सदसि यदि विद्यते कस्यापि दया स वेदनासंवेदनमयमिदमपघनं मम निजोदर-कन्दराधिवासपरमनिर्वृत्या नयतु कृतार्थतामिति। मद्वचनसमनन्तरं तर्षतरलरसन-गलितलालाजलेष्वहंपूर्विकया मामभिधावत्सु देवयोनिषु कापि मूर्तिमतीव करुणा कुतोऽपि सभाकोणादागत्योत्तरीयचर्मचीवराञ्चलेनैव (न) मंभागधेयं जनमावृत्य निजाङ्के न्यवेशयत्। तया निवारिताश्च ते देवयोनयो यथादिश-त्यार्येति तां प्रणिपत्य यथास्थानमवतस्थिरे। जननि! का भवती? किमित्यनु-कम्पते मम प्राणेषु, केन हेतुना मादृशस्य निरवसानव्यसनगृहीतस्य जनस्य निधनानन्दोदयप्रत्यूहपाप्मानमर्जयितुमिच्छतीति मम वचनमाच्छिद्यापमृज्य ममात्मनश्च बाष्पधारामिदमुवाच पुण्यवतीनां प्रवरा पुण्यजनजरती—वत्से! तर्कचक्षुषा साक्षात्करोमि, विश्वकर्मतनया सुरथसधर्मिणी सत्यध्वजवचसा सप्तगोदावरे व्यसनावसानसमयमनुपालयन्ती चित्राङ्गदाऽसि। पुत्रि चित्राङ्गदे! पुराणदिव्यावदानकोविदाऽसि, जानासि पुण्यजनाधिराजस्य शलकटङ्कटस्य तनयमप्रतिरूपविक्रमाक्रान्तलोकत्रयमीशानस्य भगवतो भूतभावनस्य भवस्यातिमात्रदयितमस्खलितपाशुपतव्रतमतिसुरासुरतपोवीरव्रतराशिं धर्म-ध्वजं सुकेशिनं नाम। यस्मिन्नाकाशगामिनमीश्वरवर्द्धितविभवं पुरप्रवरमनु-शासति सत्यव्रते रजस्तमसी परिभूय सत्त्वमवलम्बे धर्म्मैकतानबुद्धिर्निशा-

चरगणः, यस्य तेजसा रोदसीविवरमुद्दीपयति तस्मिन् पुरे स्वप्रभापरिभव-कुपितेनार्केण क्रूरलोचनप्रेरणया भुवं प्रापिते चुकोप, अर्कमप्यसीवरणयोरन्तराले न्यपातयदुग्रः। तस्मिन्मम भ्रातरि शालकटङ्कटे सुकेशिनि शम्भुना गाणपत्या-भिषेकेणानुगृहीते तामसैर्दुष्प्रवेशमीशानपदमारोहति शलकटङ्कटतनया सुकेशिनी-नामाहमशरणा कान्दिशीका च मनसा व्यमृशम्—अस्ति मम भ्रातुर्मित्र-मञ्जनो नाम गुह्यकराजः, तेन कल्पिताजीवा गमयिष्याम्यायुषः शेषमिति कृतनिश्चया गुह्यकलोकस्यावासमचलं गन्धमादनमगाम्। अमुना च गुह्यकराजेन भ्रातुरप्यधिकेन भावेन यथाकाममपूजिषि। तस्य गुह्यकपतेरञ्जनस्य महिषी सुलोचना नाम ननन्दरीव मयि ननन्द। मदयन्ती च सुलोचनागर्भसंभवा भवतीमपि लावण्यगुणैरतिशयाना न तथा मातरि न पितरि प्रीतिमकरोद्यथा मयि हताशायाम्। सा चैकदा पितृमुखात्तव चित्राङ्गदाया व्यसनमटवीप्रवेश-मृतध्वजवचसा सप्तगोदावरगमनं चोपश्रुत्य मन्दारिकामुखेन त्वयि संदिदेश—

भगिनि चित्राङ्गदे! हाटकेश्वरनिकटे प्रतिपालयिष्यसि मदागमनमिति नूनमा-युष्मती जानात्येव। तमेव दिवसमारभ्य मदयन्ती निरन्तरेण रुदितेन शयनाशन-प्रसाधनपरिहारेण च मातरमखेदयत्। सुलोचना त्वनन्यापत्यतया सुतायामति-वत्सलापि तदभिनिवेशवशंवदा तस्यास्त्वत्समीपगमनं कथमप्यरोचयत्। अथ मामञ्जनं च तदनुगमनाय प्रार्थितवती। आवयोस्तु क्षणमपि मदयन्तीपरित्याग-मसहमानयोः पुनरुक्तिदूषितमिव सुलोचनावचनमभूत्। अथ रथप्रातीरपर्यन्तमनुगम्य सप्तगोदावरप्रतिष्ठमानां दुहितरमालिङ्ग्य बाष्पगद्गदमञ्जनमहिषी सुलोचना जगाद—वत्से! मदयन्ति! शिवास्तव पन्थानः, गच्छ त्वरितागमनाय, न गमिष्यसि वर्त्मनि समयमनेकविधवस्तुदर्शनाक्षिप्तलोचना, न खेदयिष्यसि पितरमार्याञ्च सुकेशिनीमसुलभविषयप्रार्थनाभिनिवेशेन, न कदाचिदप्यार्याया नयनपथमतिवर्त्य शैशवतरला वर्तिष्यसे, न मद्विरहमन्युदूना त्यक्ष्यसि बाष्पसलिलम्, एवमचिरादा-साद्य सप्तगोदावर(म)तिगाढमालिङ्ग्य मद्वचसा सौभगेनाभिवर्द्धयिष्यसि निज-भगिनीं चित्राङ्गदाम्, अनेन गन्धतैलेन मोचयिष्यसि तस्या वेणिबन्धग्रन्थिम्, एतेन यक्षकर्दमेनोद्वर्तयिष्यसि व्यसनमलमलीमसं शरीरम्, अनिच्छन्त्यापि तया परिग्राहयिष्यसि कंदलीकोषदलकोमलमिदं दुकूलम्, अरोचमानामपि भूषयिष्यसिताममीभिरलङ्कारैः, अमुया कर्पूरपांशुसिकतया सह क्रीडिष्यसे पाञ्चालीमिथुनस्यास्य परिणयकौतुकेन, गमयिष्यसि निशा विश्रम्भगर्भिताभि-रनपेक्षितपूर्वापरप्रबन्धसंगममधुराभिः शिशुजनकथाभिः, निमिषमिव नेष्यसि दिवसान्, अयं चित्रपट एष प्रहेलिकाकोषोऽयमाख्यानकप्रबन्ध इदमनुशासनं शिल्पानाम्, एतेषु शपथशतैः प्रवर्त्यापहरिष्यसि व्यसनचिन्तां चित्राङ्गदायाः,

कतिपयेन दिवसेन विश्रम्भमर्जयित्वाऽऽत्मनो मम च शपथशतेन प्रणिपात-सहस्रेणानेष्यसि मत्सकाशमेनाम्, अथवा मामेव तत्र नेष्यसि, सर्वथा करिष्यति तव मैत्रीमयव्यवसितायाः कल्याणमस्माकमुत्तरस्या दिशश्च शासिता भगवानीशानप्रियसखो राजराज इति संभरणपेशीं मम पाणावर्पयित्वा पपात पादयोः, उत्थाय विनयावनता करेण दुहितुरादाय दक्षिणं करमस्य नृशंसस्य जनस्य पाणौ समर्पयामास पत्युरञ्जनस्य। कुटिलया बाष्पकलुषया दृशैव वचसामगोचरमपि निश्शेषं सन्दिदेश। ततः प्रथमं शरीरमनन्तरमाननमतः परं कृच्छ्रेण लोचनमपावर्तयत्।

प्रतिनिवृत्तायां सुलोचनायां दक्षिणप्रतीच्येन वर्त्मना प्रस्थिता वयमासेदिमादितिवने तदेव बीजपूरतरुतलं यत्र मन्दारकामोहमुपलभ्यानिष्टशङ्कया निष्पन्नसाहसा भवती सरस्वत्यामपातयदात्मानम्। तत्र वनपालेन कामपालनाम्ना गुह्यकेनोपहृत्य फलकुसुमानि प्रणिपत्य न्यवेद्यत गुह्यकानामधिपतिः—महाराज! सरस्वती चित्राङ्गदामपोह्य विवरवर्त्मना गोदावरीम्, सा चोत्क्षिप्य हाटकेश्वरायतनमनयत्। तत्रानुपालयति मदयन्त्या गमनसमयमसावित्यगस्त्याश्रमादधुनैवागत्य भगवन्तं वैश्रवणमुपासितुं गतः कैलासमुपगोदावरीतटमहावटविटपिनिवासी कुम्भकुक्षिर्नाम यक्षो निरचष्ट। मन्दारिकाऽपि मुहूर्त्तादुपलभ्य चेतनामृतध्वजाश्रममन्वधावदिति कामपालमुखात् कुशलिनी मायुष्मतीमाकर्ण्य हर्षेण स्म प्राप्ताः स्मो हिरण्वतीम्, तत्र च प्रतिस्रोतः प्लवमानस्य कस्यापि प्लवङ्गमस्य भुजस्तम्भावष्टम्भप्रतिहतप्रतिकूलप्रवर्तितप्रवाहवित्रस्तोत्पतितयादांसि, पार्श्वप्रसृतस्तोकप्रस्रवणयुगलसंकलनकृशतराधरीणपूराणि, स्रोतोमूलपुञ्जितानि, उद्वेल्लनविलङ्घिततटानि, कूलविटपिमूलपाटनपटूनि, हैहयबाहुपरिघसहस्ररुद्धरेवानुकारीणि हिरण्वतीसलिलान्यपश्याम।

क्रमेण स कपिप्रवरो मातङ्गकलभतुङ्गेन, लाङ्गूलदण्डताडनदूरापसृतविभक्तप्रवाहप्रत्यावर्तनसंघट्टघोषचकितोत्पतत्पतत्त्रिकुलसंकुलकुलायेन, उपकूलविपुलोपलविदारणदारुणचपेटवज्रपातेन, निर्घातघोरगलगर्जितोद्गारतर्जितविपिनप्राणिचक्रेण, चङ्क्रमणवेपितवसुन्धराचक्रवालेन, लम्बमानोदरबालवेणिविगलज्जलधारेण, गुल्मशाखावकाशप्रकाशमाननिर्झरेणेव हरितोलपच्छन्नोपलेन, कुलगिरिणा, वपुरास्फालनविधुताञ्चितरोमसूचिसमुत्पतितशीकरप्रकरेण, उत्पातावनिकम्पवेपितावयवेनेव तरलदलाग्रोद्गीर्णनीहारबिन्दुवर्षिणा भूरुहां प्रवरेण मूर्तिमतेव चपलभावेनात्मना तीरमवततार।

ततो द्विगुणकपिलकपोलपालिलङ्घनजाङ्घिकप्रान्तया कोपकडारया दृशा प्रभातमार्तण्डमण्डलोद्भूतया किरणभासेव कुमुदवतीम्, दवानलज्वाल-पिण्डोत्सर्पदलातलेखयेव वनलताम्, आमीलितम्लानलोचनकुसुमां ग्लपयामास मदयन्तीम् । आलोक्य तु कुलिशकोटिक्रूरेण कटाक्षेण भीतिवेपितावयवाममूं वत्साम्—अरे ! वेदवति ! न बिभेति कृतान्तात्, कोऽयमपहृत्य नयति कालगृहीतस्त्वामित्यशनिनिष्पेषभीषणमाभाष्य तामनुद्रवन्नधावत् । तस्य गिरिगण्डोपलघातगुरुणा चरणदण्डपातेन विदीर्णसन्धिबन्धो हिरण्वतीरोधः-प्रपातो मदयन्तीमप्यादाय मध्येप्रवाहमापपात । तत्पतनध्वनिचकितस्य पश्यतो गुह्यकपतेस्तेन रोधसा सममेव पपात करात् कार्मुकम्, मदयन्त्या सहैवाधो ललम्बे कन्धराबन्धः, हिरण्वतीपूरेण साकमेव द्वेधा विदद्रे रजसाविलं च बभूव हृदयम्, बृहद्बुद्बुदफेनेन सार्द्धमुद्बभूव हा ! किमेतदिति वचः, कच्छेन सहैव वारिपूरेणापूरि लोचनम्, वत्सया सममधस्तथा ममज्ज मनोरथो यथा चिरेणापि न क्वचिदुन्ममज्जेत्येवमकाण्डोपनतव्यसनदुःस्थमप्यात्मानमवष्टभ्य धैर्येण अधिज्यकार्मुकयोजितेन शिलीमुखेन तं वलीमुखहतकमञ्जनो हन्तुमारेभे । तं च विविधतनुवदनविकारैर्विडम्बयन्नुत्पत्य गोष्पदमिव नदीमुल्लङ्घ्य विवेशाटवीं दुष्टप्लवङ्गमः । विफलव्यवसायान्तरितक्रोधमञ्जनं पुनराविवेश शोकः । स शून्यया दृशा दिशामवकाशानवलोक्य नृशंसया जात्या प्रकृत्या च प्राणपरित्यागोचितेऽपि तस्मिन्ननेहसि स्वस्थमिव जीवन्तमेनमभागधेय-मभ्यर्णवर्तिनं जनमशंसत्—

भगिनि ! सुकेशिनि ! पश्य नृशंसनिसर्गेण दैवेन पातितमिदं वैशसम्, अस्य कः प्रतीकारः ? न मम प्रयोजनमनेन मदयन्तीविरहिणा जीवितेन, न सुताव्यसनदग्धेन राजपदेन, नापत्यनिधनसाक्षिणा शरीरेण, न तोकशोकक्रथीयसा कलत्रेण, न दुहित्रा विनाकृतेन मित्रकुलेन, केवलमुग्रेण तपसावसाद्य पातयिष्यामि कायम्, अनुजानातु मामञ्जनमञ्जनाचलगमनाय तदात्वायतिविभागविज्ञानराशिरार्या, शापिताऽसि मम सुकेशिनश्च जीवितेन यदि प्रतिहन्तुमीहसे मम व्यवसायम्, एष त्वयि मे प्रणामाञ्जलिः, एष्यसि मया प्रणिपत्य प्रार्थिता गुह्यकनगरम्, तत्र तव प्रजावती यथा न त्यजति जीवितं तथा करिष्यसि, लोकवृत्तचतुरे जानासि मित्रवर्गमाश्वासयितुम्, अहो ! न मामद्यापि जहात्याशापिशाची, यस्मिन् दिने शिथिलवलयबाहुवल्लि, नीलरुचि-चूचुकम्, अलसरोचनपाण्डुरच्छायमुखपुण्डरीकम्, ईषदुद्भिन्नहनुधवलगण्डपालि, चतुरसहचरीविवर्द्धितायाममेखलादामसन्दाननदूनमध्यम्, अवलुप्तवलिभङ्गतुन्दि-

लोदरमदृश्यत वपुर्देव्याः, तदारभ्य मुदितमदयन्तीवदनावलोकनदृढीभवदाशापाशमासन्नमात्मनस्तनयाननदर्शनमशङ्कत मम मनो नाधुनापि विरमति। यदि च विरूपमपीदमस्मद्भागधेयस्य दैवादेवमेव भवेत् तदा मुद्गलेन संस्कृतं ग्राहितविद्यं च तं कुमारं पितुर्मम पदे प्रतिष्ठापयिष्यसि। गुह्यकलोकपुरोहितस्य भगवतो मुद्गलस्य पादयोः प्रणिपत्य प्रार्थयिष्यसे—महामुने! नात्र मन्युमर्हसि, मदयन्ती राजवल्लभा भविष्यतीति तव वचो मम कर्मदोषेण विसंवादमापद्यत, वेदोऽपि कर्मकर्तृसाधनवैगुण्येन व्यभिचरति, प्रसीद भगवन्निति प्रसाद्य तथा यतिष्यसे यथा न शिथिलयति गुह्यकानामाभ्युदयिकम्, विरज्य त्यजति वा कुटुम्बिनां संसर्गवृजिनम्, आसज्यते वा प्रव्रज्यामहोत्सवे, विशेषतो गोपयिष्यसि प्राणाननेकव्यसनोपनिपातनिस्सहाया देव्या इति वचनाद्विरम्य क्षणमनुध्याय चकितं चमत्कृत्य किञ्चिदपरमप्यवोचत्—

विविधावदानप्रत्यक्षदर्शिनि! सुकेशिनि! स्मरसि देवपक्षमाश्रितस्य दितिजस्य पुष्करमालिनः कलत्रं कुण्डलां नाम, या किल शुम्भासुरेण सह सुराणां प्रवृत्ते प्रधने निधनमुपगते भर्त्तरि पतिव्रतैकतानमना मुनिभिरपि दुस्तरमतप्यत तपः। या च वज्रकेतुतनयेन दानवेन पातालकेतुना बलादपहृत्य रसातलविवरं प्रवेशितामभरगायनविश्वावसुनन्दनां मदालसामाजन्मनः सहचरीमनुगता बहूनि दिनानि कनकपुरनामनि पातालपृथिव्योरन्तरालमुद्दीपयति विप्रचित्तिनिर्मिते नगरे गन्धर्वनन्दनाविनोदनाय गमयामास, या च शत्रुजितस्तनयेन कुमारकुवलयाश्वेन गालवमुनिमन्युवेगनिःश्वासपवनप्रसूतं कुवलयनामानमश्वमारुह्य मर्त्यमरुतामध्वरोपप्लवं प्रशमयता शरेण विद्धे वराहवपुषि पातालकेतौ भयादवनिविवरवर्त्मना विद्रवति सुरभिवरप्रसादमुदितां महालसामासन्नेनाभ्युदयेन वर्द्धयामास, यां च तमेव विवरप्रविष्टं वराहमनुद्रवन्नर्कवरादप्रतिहतरयेण तेन कुवलयेन व्यतीत्य घनतिमिरवलयमासादयन् कनकपुरमवरोधप्रासादपरिसरसंचारिणीमवलोक्य तया सहैवोपरिवलभीमारुरोह कुवलयाश्वः, या च तत्कालाहूतेन गन्धर्वकुलगुरुणा तुम्बुरुणोपकल्पितविवाहविधिं मदालसाममुष्मै शत्रुजित्कुमाराय प्रत्यपादयत्, या च स्वतनये त्वाष्ट्रमहास्त्रप्लुष्टदानववर्गेण मदालसामात्मसदनं निनीषता कुवलयाश्वेन कनकपुराधिराज्याभिषेकं प्रापिते शिशावपि पितृधुरां वोढरि प्रकृतिसुन्दरे कन्दरमालिनि मम पितुर्विरोचनस्य सदनमासाद्य यवीयसीं मे स्वसारमयाचत। स्मरसि वा तस्याः पुष्करमालिधर्मपत्न्याः कुण्डलायास्तनयेन कन्दरमालिनोपयम्य कनकपुरं नीतामसीमशीललावण्यां वत्सामञ्जनाम्।

अयि बहुश्रुते ! किमद्यापि नाश्रौषीराञ्जनेयीं कन्दरमालिनस्तनयाम्, एनां हि वेदवतीं नाम दारिकां न शीलेन, न चारित्रेण, न लावण्येनातिशेते चित्राङ्गदा न वा मदयन्ती । तेन हि वेदवतीनामग्राहमनुधावन्तमेनं वानरहताश-मुत्प्रेक्ष्य न तथा मदयन्तीव्यसनेन दूयते मम मनो यथा वेदवतीविपदा-शङ्कया । तस्मादितो गत्वा गुह्यकनगरमनन्तरमचिरादेव प्रविश्य पाताल-मावेदयिष्यसि ममावुत्तमनुजां च वत्सामञ्जनाम्—

कापीयमापदुत्पादिता दैवेनास्मद्वंशवारिवाहावग्राहरूपेणावतिष्ठते, कोऽप्येष शापवशात्तामसीमिमां कपियोनिमनुप्रविश्य देव एव नो बाधते, किमुत काचि-दियं दानवानां माया धर्षयति पुरन्दरानुचरानस्मान् । अयमीदृशो न क्वापि केनापि दृष्टचरः श्रुतपूर्वो वा वानर इति विदितमदयन्तीवृत्तान्तौ युवां गोपायत-मायुष्मतीं वेदवतीमित्येवमञ्जनस्य वचनमाकर्ण्याहमब्रवम्—

अनुभूतपूर्वमिदमस्माभिर्गन्धर्वराजस्य विश्वावसोस्तनया मदालसा पाताल-केतोरनुजेन तालकेतुना मुनिवेषमास्थाय पतिनिधनं श्राविता तत्याज जीवितम्, इतरदारपरिग्रहपराङ्मुखे कुमारकुवलयाश्वे पुनरश्वतरनागनिःश्वासमार्गादावि-र्बभूव,पुनरपि तस्यैव शत्रुजित्कुमारस्य महिषी भूत्वा राजानमलर्कमसूत । दाक्षायणी च सती दक्षापराधत्यक्तजीविता हिमवतो धर्मदारेषु मेनायामाविरासीत्, पुनरपि हरपरिग्रहो बभूव । साम्प्रतमेव किन्न पश्यसि विश्वकर्मदुहिता चित्राङ्गदा न न काञ्चनया, न गोमत्या, न गोदावर्या पयसि मज्जिता, सरस्वत्या मज्जितापि न वियोजिता प्राणैः । तेन हि विचित्रा दैवगतयः, मृता अपि प्रत्युज्जीवन्ति, जलमग्ना अपि न म्रियन्ते । न चाविचार्य वस्तुतत्त्वम्, अनादृत्य मुद्गलनिगद-निगमान्, अनाश्वास्यानन्यशरणान् धर्मदारान्,अनवलोक्य तनयामुखचन्द्रम्, अप्रति-कृत्य विपदम्, ईदृशे संसारपरित्यागसाहसे भवादृशो जनः प्राकृत इव प्रवर्त्तितुमर्ह-तीत्यश्रुत्वेव मद्वचनमाच्छिद्य मत्करयुगलोपरुद्धौ चरणावत्यक्रामदस्मन्नयनगोचर-मञ्जनः ।

अहं तु यथानिर्दिष्टमनेनानुतिष्ठन्ती कुरुक्षेत्राद् गुह्यकनगरं ततः कनकपुरं प्रतिष्ठमाना यावदमुं देशमासादयामि तावदस्तमुपगतो विवस्वान्, अबाधत स्त्रीत्वभावेन तामसजात्या चरमेण वयसा च दत्तहस्तावलम्बाऽ-नपेक्षितावसरा क्षुधा, ततोऽस्य पुण्यजनसमाजस्यातिथिरभवम्, एतैरुपनीतेन पिशितरसेन निर्वर्तितप्राणयात्रा वत्सामायुष्मतीमपश्यम्, इत्यभिधाय कर्कन्धू-फलस्थूलैरश्रुबिन्दुभिरङ्कविषण्णमेनमभ्यार्द्रयं, जनमुत्तरोत्तरप्रवृद्धव्यसनकर्कश-मप्यार्द्रतामनयदार्या सुकेशिनी नाम निशाचरजरती । हन्त ! भगिनि सुगृहीत-

नामधेये ! प्रेमदुर्विपाकवेदनामर्मवेदिन्यां त्वयि किमकथनीयं नाम । तदा सुकेशिनी-सकाशादुपलभ्यात्मनः कृते मदयन्त्यास्तादृशं वैशसमयस्मृतनिजव्यसनाभि-संधिरपरमेव कमपि कस्यापि विपन्मयमहाभूतसर्गंप्रजापतेर्निर्माणमुत्तरोत्तरतुङ्ग-व्यसनमयानेकलोकोपकल्पितमावेग इति, भयमिति, चिन्तेति, दुर्गतिरिति, विषाद इति, व्याधिरिति, मरणमिति, नरक इत्येवंविधैर्वेदनापरमाणुभिरिव संचित-मपरिच्छिन्नघातनामयब्रह्मोपनिषदामिव सारभूतमपारं संसारमधिशम् ।

तत्र खलु दुःखाद्वैतगिरेः शिखरमधिरूढा सर्वा अपि पूर्वविपदो वामनीव्यंलोक-यम्, एवमुत्तरोत्तरातिशयितदैवदुर्व्यसनतस्करपरम्परया हस्तानुहस्तिकया मुषिता-पहृस्तितहृदया नाज्ञासिषम्—अस्यां निशि केन गुरुणा शिक्षिता तावन्ति श्मशान-वासिसत्त्वहृदयदारणदारुणानि व्यलपम्, आचार्यस्य कस्योपदेशेन तावतामावेग-चपलवृकलोकावलोकितानां शोकनाटकभूमिकापरिग्रहाणां भूमिरभवम्, उपाध्या-यात्कस्मादभ्यस्य यावदधीताधिकानि रुदितकलाकौशलानि व्यस्तारयम्, अध्याप-कस्य कस्यान्ते बहुदिवसमवसम्, यदुपासनाफलानि विविधविकारतनुभङ्गिसंगीत-कान्यवसरे प्रादुरभवन्निति ।

प्राणाधिकप्रणयिनि ! वाचामगोचरमपि वेत्सि परेषां हृदयशल्यम्, कियदावेदयामि, साऽहमुत्पत्य सुकेशिस्वसुरङ्कादवनौ निपत्य क्वचित् क्रकचधाराकण्टकाङ्कुरक्रूरकरङ्ककर्करप्रकरकृत्तकृत्तिः, इतरत्र वित्रस्त-मेचकपतत्त्रिपत्त्रव्राताभिघातवातस्रस्तधम्मिल्लबन्धा, परत्र चकितोत्पतित-वृकपोतपर्यस्तचितावितितकपोतधूसरधूमधोरणिमलिनानना, अन्यत्र नरमुण्डमण्डल-निचयप्रतिहतपरिवेल्लना, विपदर्णवार्णसामावर्ते पतितेव, विबुधवार्द्धकि-परिवर्त्यमानस्य शापशल्यशाणस्य शूलशङ्कुना विद्धमर्मेव, नियतिवात्याविवर्त्ता-पवाहितेव, मुहुर्मुहुः कपोतीव भूपृष्ठविलोठनशतानि तन्वती तथा व्यचेष्टिषि यथा मन्युविस्फुरिताधरैर्गोमायुभिरपि चिन्तानलविस्फुलिङ्गदग्धशेषा भसित-धूम्राः समयम्यन्त मम केशाः, वृकैरपि नखनिकोचमृदुलेन प्रकोष्ठपृष्ठेनामृज्यन्त मम नयनबाष्पवेणयः, नकुलैरपि पक्ष्मलेन पुच्छदाम्ना प्रोञ्छितानि कीकस-सूचिव्यधक्षतानि, तालजङ्घैरप्यवनतमुखैरभ्यषेचिषि नयनोदधारया, पूतनैरप्य-वीजिषि श्वासवातैः, भूतैरपि बाष्पमतनोद्गमान्तरालज्वलितमुखोल्कातडिदा-लोकेनालोक्य लोकेष्वदर्श्यंत मदवस्था, पिशाचैरपि परित्यक्तपिशितग्रासधावितै-रयोचिषि, योजनबाहुभिरपि दूरप्रसारितकराञ्जलिपुटाहृतेन गोदावरी-सलिलेनाक्षाल्यत मम मुखम् ।

इत्येवमभिवर्द्धमानेन शोकवेगेन विक्लवमप्याननमवष्टभ्य निशाचरजरतीमब्रवम्—अयि ! मातः सुकेशिनि ! या मयि श्रवणमात्रेण प्ररूढनिर्भरप्रणया नानवसितव्यसनायां चित्राङ्गदायामात्मनो गृहनिवासं रोचय इति प्रतिज्ञामारूढा ममैव मन्दभाग्याया विनोदनाय दीर्घमध्वानमभिलङ्घ्य मामभ्युपपद्यमाना महदिदं वैशसमुपनीता दैवेन, तस्या लोकोत्तरसौजन्यनिधेरकारणवत्सलाया मदयन्त्या व्यसनवज्रपतनोत्पातघनमिदं मदपघनमार्या कस्मै निमित्ताय गोपायति । पुण्यजनवंशपर्वतोत्थिते संतापदूनलोकलोचनकादम्बिनि ! न शोभसे मदयन्तीवलाकया विरहिताङ्कपालिः, मम हृदयकुमुदस्य मरणकौमुदीमहोत्सवमन्तरयन्त्या जीवनवदान्यतापि तव मलिनिमानमावहति, न केवलमात्मानमात्मच्छायया दयासरित्पूरमपि मलिनयसि, न पूरयसि मम चातकशिशोरिव निधनाभ्यनुज्ञाशीकरेण मनोरथम्; अयि जननि ! त्यज नक्तञ्चरजातिसमुचितां नृशंसताम्, आशंस मम निर्वाणम्, अनुशाधि केनोपायेन त्यजेयमनवसानव्यसनदुःस्थावस्थया दग्धं शरीरमित्यालप्य तस्याः पादयोरपतम् ।

अथ कराभ्यामुत्थाप्य मामाघ्राय मूर्द्धनि सुकेशिनी निजगाद—चपले निशामय मयि गुह्यकनगरं गतायां दयितस्य दुहितुश्च विरहमसहमानाया देव्याः सुलोचनाया हृदयमाश्वासयितुमिदमुवाच मुद्गलः—

राजमहिषि ! न मे वाग्ब्रह्म जिह्मतया दूष्यते, नानृतेन स्पृश्यते, मा कदाचिदस्मद्वचसां विसंवादमाशङ्किष्ठाः, इतः पञ्चदशेऽहनि पूर्णश्चन्द्रमाः कृत्तिकया संगत्य प्रेक्षिष्यते पुष्करे समवेतानां दैवतदनुजमनुजपतिदम्पतीनां द्विजानां च सार्थस्य कौतुकम्, ततो विविक्ते पुष्करसमाजे कृत्तिकाभवनाद्रोहिणीमभिसरति षड्विंशत्यापि तारकाभिरातात्रतरलतारकेण नयनकोणेनाभिवीक्षिते पुनरपि दक्षशापभीत्या चकिते चकोरचञ्चुपुटतर्पणचणार्चिषि चमरुलाञ्छने वत्सा मदयन्ती चित्राङ्गदया वेदवतीभ्यां च सह सङ्गमिस्यते (संगंस्यते), ततः सर्वमेव वृत्तमुत्तरोत्तरमधुरमाधास्यति विधिः । आधेहि हृदि धैर्यमप्रमादं च । यच्चेदं किमपि वस्तु वानरविग्रहेण कुमारिकाणामापदमापादयति तदेतद्दैवतानां परमरहस्यम्, अस्य तत्त्वमनाख्येयमनार्षचक्षुषि जने, विशेषतः स्त्रीप्रकृतौ । शिलासङ्घातकठिननिरन्तरतुङ्गस्तनपरिणाहे हि हृदि न्यस्तं परितः प्रसर्पति गुह्याख्यानसलिलम्, आशयं गभीरमप्राप्य न विश्रब्धमवतिष्ठते, न वा तत्रैव विलीयते, सततसन्निहितरतिमदनमिथुने नारीमनसि नाषडक्षीणो भवति क्षीणशक्तिवैभवो मन्त्रः, कामिनीकर्णाभरणमणिशिलाप्रतिहतं रहोवृत्तकथास्रोतो द्वेधा विभिद्यते,

प्रविशत्येकेन श्रवणविवरवर्त्मना स्वान्तसागरम्, अन्येन ताटङ्कव्यधपरिवाहेण प्लावयत्यनेकविषयान्, एनममराणामतिनिगूढं मन्त्रमारण्यकेषु शौनक ऋतध्वजो गालवश्च, गृहमेधिष्वहं भार्गवकविराङ्गिरसजीवाश्च मुनयो जानन्ति, ज्ञास्यथ चावसरे यथैतदिति मुद्गलोपदेशमहं सुलोचना चाश्रृणुव।

अनन्तरमत्रागताऽस्मीत्यवितथवचसि मुनौ विश्वस्य विश्वस्य भूषणभूतां त्वामुपदिशामि, गच्छ त्वममुना विन्ध्यपादाटवीवर्त्मना पुष्करं नाम सरः। तत्र कार्त्तिक्यां यात्राप्रसङ्गेन समवेत्य पिण्डीभूतमिव त्रैलोक्यमालोकयिष्यसि। यदि तेषु कोऽप्यमरावतीनागरजनो वा, विदर्भाधिपतिः सुरथ एव वा, ऋतध्वज ऋषिर्वा, मदयन्ती वा, मन्दारिका वा, मन्दोदरी वा, कन्दरमालिदुहिता वेदवती वा, द्वितीया कापि मुद्गलगृहीतनामा वेदवती तव नयनगोचरे वर्त्तेत तदा गुह्यकगुरुमृतध्वजं च प्रमाणयन्ती समगमनुपाललिष्यसि, न चेत् त्यक्ष्यसि यथेच्छममुष्मिन्नेव पुष्करसरसि शरीरम्, इदानीं परित्यज माम्, उपरमति रजनिः, अजनि गमनकालातिपात इति त्वरितमुदतिष्ठत्।

उत्थाय प्रणिपतन्तमेनं जनमाघ्राय मूर्द्धनि, ततो नातिदूरवर्तिनि स्थूलशिलातिरोहितद्वारि धराविवरे विवेश। प्रथमं प्रविशन्त्या तया कल्पितं पन्थानमासाद्येव रसातलविवरं प्रविवेशान्धकारपूरः, कुमुदषण्डा इव शनैरनीयन्त मलिनतां चितानार्मिचषः, क्षणभङ्गुरेण प्राचीमुखरागेण कृष्यमाणमुत्प्रेक्ष्य दिननायकं किमपि सिष्मिये कमलिनी, श्मशानवाटपर्यन्तजीर्णकीचकस्तम्बकुलायनिलीनेनोलूकलोकेन त्यक्तः काककुलमाशिश्रिये कलकलः, मदकलकलविङ्ककाकुकोलाहलोद्वेजनाकुल इव दिशामन्तमपससार तिमिरभारः। क्रमेण च विकचकोकनददलवलयशोणशोचिषि, विश्वकर्मकरपरिवर्तितशाणकोणकषणशोणितोक्षणमिव वहति, पूर्वपर्वतशिखरमारोहति, सरोरुहकुलहासनवैहासिके, भगवति त्रयीमयतनावावृत्ते तस्मादतितीव्रप्रतापकोपनादपवार्य सहजजनव्यसनमलिनमूर्त्या ममायायाः प्रतिकृत्या छायया प्रत्यपद्यत तातशापग्रहगृहीतविग्रहया मया सह दिगन्तरभ्रमणसाहायकम्।

अथ छायासहायाहमुत्तरां हरितमभिप्रतिष्ठमाना निशि सुकेशिनीकरदेशिनीनिर्दर्शितमध्वानमारोहम्। अध्वनि गमितगणरात्रा बहुतिथेन तिथिना विन्ध्योपत्यकानामतिथिरासम्। आसन्नमालोक्य तमचलमचिन्तयम्—एष वसुन्धराधुरोद्वहनेनेव भुग्नकन्धरावन्धो विन्ध्यगिरिः, अयमसौ महात्मा चराचरगुरोर्मित्रावरुणवंशवर्द्धनस्य नहुषलक्ष्मीदीर्घप्रवासदीक्षणाचार्यस्य सुरार्णवपरिहारव-

शिष्टसागरषट्कचुलुकनिर्वर्तितक्रोधप्रायश्चित्तद्विराचमनस्य लोपामुद्रापतिव्रताधिष्ठातृदैवतस्य महामुनेरगस्त्यस्य चरणावभिवादयितुमवनतेन मानापकर्षमापादयता शिरसा तं मेरुमतिवर्त्यैव वर्तते, यो हि सर्वपर्वतसार्वभौमेणामुना बहुधा विलङ्घितायामोऽपि रत्नसानुरस्मीति गर्वेण स्तब्व (ब्ध) मेवावतिष्ठते। किं करोतु धनमदान्धस्य तस्य नित्यसन्निहितो गुरुः, अवज्ञाय यं सुराणामतिपरिचयेन संक्रान्तमदमभितो भ्रमन्ति तेजस्विनः। किञ्चायं त्रैलोक्यातिक्रमणकर्मणि क्षमोऽपि केनापि निमित्तेन खर्वीकृतविग्रहः पुण्यापगाप्रवाहपावनपादो विलङ्घिताभ्रवर्त्मा निधिराश्चर्यचरितानां विस्मयस्तिमितलोचनेन बलिना वैरिणापि पूज्यते, निखिलमपि विश्वमात्मकुक्षिमधिवासयन्नपि न संबाधो भवति, जलधिमपि परिपूर्योद्वर्तितुं क्षमते, प्रकामसिद्धभूतिरोहितस्यास्य वपुरत्र दितिनन्दनशोणितासवास्वादनोत्सिक्तवराहवपुष्य (षा) सोमादिप्रकृतिरभ्युदयेन वर्द्धयति जनान्, एष भीषणरमणीयो नरमयश्च सिंहमयश्च विचित्रेण विग्रहेण जनानां विस्मयं जनयति, कटकचक्रादेतस्योत्पतन्तस्तिर्यञ्चः प्रभवन्ति सागरमुल्लङ्घ्य द्वीपान्तरमासादयितुम्, अनेन महीभृतां जातिरतिमर्त्यपदं प्रापिता, घननीलमम्बरमस्याधरार्द्धमवलम्बते, भूतसंघातमयमयमात्मानं दर्शयित्वा मोहयति विश्वम्, नात्र प्रतिहतानि कल्पन्ते धर्माध्वरप्रवर्त्तनानि, नमोऽस्त्वस्मै गिरिरूपेणावस्थिताय पुरुषोत्तमायेति प्रणिपत्य विन्ध्यमस्य पादाटवीवीथ्या बहूनि योजनानि व्यलङ्घयम्।

अथेदमासाद्य पुष्करं नाम सरो नात्र कमप्यभिमतं जनमद्राक्षम्। अपक्रान्तेषु यात्रासमवेतेषु द्विजेषु राजसु च यावदपगतप्रत्याशाबन्धा मरणोपायमनुचिन्तयामि तावदापतिता मम नयनयोः प्रियसखी। साऽहमेवंविधा यदि भवत्याः संभाषणमर्हामि, यदि चामङ्गलमूर्त्तेर्मम मुखावलोकनान्न जुगुप्सते भवती, यदि चास्मत्संसर्गपाप्मनो न बिभेति, यदि च विधिवञ्चितजनविश्रम्भादात्मनि विधेरपराधं न शङ्कते, यदि क्षणार्जितमपि प्रणयमनुरुध्यते, यदि च करुणापरवशतया गर्हितमप्यभागधेयवचनसम्भिश्रणं सहते, तदा व्यपनयतु मे श्रवणतृष्णाम्, उदाहरतु किन्निमित्तमनुरुध्य कृत्तिकामतिपत्य रोहिणीमभिसरति हरिणलाञ्छने वृत्ते च पुष्करयात्राफले विजनमिदमरण्यमनुभ्रमति भवतीत्युपरस्य वचनादातङ्कशङ्कासंकुलविलक्षवदना द्वितीयां दारिकामवलोकयांबभूव चित्राङ्गदा।

इति श्रीगोकुलनाथसूक्तौ कथायां चित्राङ्गदाचरित्रं नाम द्वितीयमाख्यानकम्॥

---

## तृतीयमाख्यानकम्

अथ सा निजगाद—भगिनि! चित्राङ्गदे! निशामय—नास्त्यविषयो दैवदुर्विपाकानामत्र संसारवर्त्मनि परिवर्तमानेषु, कथमस्खलितानुरागव्रतवीतपापमतुलज्वलदनङ्गबाणानलदग्धकायकनककालिमानमात्मानमवमन्यसे। धन्याऽसि, नान्यया निर्व्यूढपूर्वम्, इतरया नाभ्युपेतचरम्, अपरया नास्वादितविपाकम्, अतिगहनतन्त्रम्, अविषयं त्रपायाः, न गोचरं पारतन्त्र्यस्य, मन्त्रप्रतिक्रियारहितम्, अनौषधोपचरणम्, आक्षिप्तमाक्षिकरसातिशायिनिर्वाणसुखगौरवम्, अगणितरौरवनिपातातङ्कसंकटम्, ऊरीकृतखलोपहासम्, अवधीरितबान्धवत्रासम्, अपहस्तितप्राणबहुमानम्, अनपेक्षितशरीरस्थितिनिर्बन्धम्, एवंविधमेनमधरीकृतसुरासुरमुनिमनुजसिद्धगन्धर्वकन्यकाकदम्बम्, अवधूतविषयभोगानुभूतावधूतव्रतम्, असंवरं प्रणयोन्मादमुद्वहन्ती श्लाघनीयासि मदनाध्वरदीक्षितैः, स्पृहणीयासि दारिकाभिः, अर्हणीयासि गर्हितगार्हस्थ्यदुःस्थावस्थाभिरखिलगृहिणीभिः, उदाहरणीयासि प्रेममर्मविदां गणनेषु। स्नेहसूत्रभाष्यमिदमनधीतकोविदया त्वया निबद्धम्, अनेन प्रीतितन्त्रे पण्डितः संसारः, हार्दतत्त्वविज्ञानेष्वधिकृतो लोकः, सम्प्रत्यन्ते वसन्तु रसन्तसखचरितग्रन्थसंशयग्रन्थिच्छिदुराणामुपाध्यायानामनभ्यस्तमन्मथोन्माथविद्या बटवः।

जानामि प्रथमेन पदारोपणेन त्वया प्रहत एष पन्थाः, येन संचरमाणानां कुमारिकाणां न कण्टकैः प्रतिहतानि, न विषमस्खलितानि, नासहायभयङ्कराणि, न मोहमुषितविभागकान्दिशीकानि भविष्यन्ति गतागतानि। कतकक्षोदैरिवामीभिर्व्यसनैः प्रथममत्याविलमनन्तरमतिविमलमनुरागरसमास्वादयिष्यन्ती बहु मंस्यसे दयितविरहम्। अननुभूताभिलाषतर्षाय पुरुषाय योषिते च न स्वदते सुधावदातोऽपि संभोगरसः। जानासि सहचरि! कृतप्रतिकृतमचिरेणैव निर्वर्तनीयमित्युपदेशं ग्राहयितुमात्मनो दैवदुर्विलसितानि मयि संविभज्य ममापि व्यसनसंविभागेनाधिकव्यसनिनी भवितुमिच्छसि। कथयामि तावदामूलादहं याऽस्मि यथेमामरण्यानीमानीताऽस्मि दैवेन।

कथं न ज्ञास्यति प्रियसखी यदस्ति कैलासस्य हेमकूटनामनि दक्षिणशिखराधित्यकायामवाचीं दिशमाश्रित्योत्तरेण ब्रह्मपुत्रोत्पत्तिसरसो हिरण्यगर्भरेतःकुण्डादखण्डपरशुना खण्डपरशुप्रियशिष्येण भगवता भार्गवरामेण कठिनकुठारधाराकृतपाषाणस्त्यानगर्तनिष्पन्नपरिखाप्रयोजनायां परिसरमणि-

शिलामरीचिमण्डलप्राकारपरिवृतायां गन्धर्वपुरि गव्यूतिव्यासपरिणाहा, मरकतरत्ननिचयनिचितपरिधिः, अखण्डस्फटिकसंघातगर्भकुट्टिमा, पद्मरागमयीभिरिन्द्रनीलकीलयोजितवज्रमयविष्कम्भस्थूणाभिरासन्दिकाभिरिन्द्रचापमयवप्रवलयेनेव परितः परिक्षिप्ता गीर्वाणगायनानां सभा।

यत्रामरावतीमपहायाप्सरसो नाम सुरवारवनिताः, भोगवतीपरिगतनागनगरभोगविमुखभोगाभोगौ भारतीवरवितीर्णगान्धर्वविज्ञानौ कम्बलाश्वतरौ नाम काद्रवेयौ नागनायकौ, परित्यक्तप्रजापतिसदस्समाजो नारदप्रणयमगणयन्नभ्यस्तस्वराम्नायो भगवांस्तौर्यत्रिकाजीवानां कुलगुरुस्तुम्बुरुः,अन्ये च रागरसिकाः सततमावसन्ति। यत्र विबुधवेश्यानां कण्ठे चाधरे च मनसि च रागः, रतेषु गीतेषु च मूर्च्छनासुखानि, वीणासु कटाक्षेषु च श्रुतिनिवेशः, मौग्ध्यविलासेषु स्वरसंयोगेषु च ग्रामीणता, धैवतेषु कुचकलशेषु च कार्कश्यम्, निभृतनिधुवनेषु मृदङ्गेषु च कोणप्रान्तनिर्दयताडनम्, भ्रू विभङ्गिषु तानगतिषु च कौटिल्यम्, अर्चनासु विषादलिङ्गं न पुनरवस्थासु, गुरुकलत्रानुषङ्गो मृगाङ्कशुचिनि जघने न तु सम्यजने, अनवरतभयकम्पो मुग्धासु न जानपदोपजापेषु, अहिभयाविर्भावो वेणिदण्डेषु न राजसु, राजमण्डलविद्वेषिता बालावदनेषु न प्रजाचक्रेषु, चक्रभेदव्यापारो दशनज्योत्स्नासु न पिशुनवचनेषु,वदनभङ्ग्यो गान्धर्वेषु न दोषविकारेषु, दोषानुसरणमभिसारिणीषु न विवेचकेषु, दशनदंशकरजविदारणसाहसिक्यं मदनमदमत्तेषु न श्वापदेषु, न परिणयविधिविडम्बनाविषयः प्रणयबन्धः, न पाणिपीडनपारतन्त्र्यपीतसारं दाम्पत्यम्, न गुरुत्रपासंघातघनमूढो मदनबाणः, न गोपनकदर्थितोऽनुरागः, न गृहमेधकर्मतन्त्रान्तरितकेलिरसदुःस्थमिथुनं गार्हस्थ्यम्। एवंविधस्य तस्य दिव्यानामास्थानरत्नस्य नायको विश्वावसुचित्ररथचित्राङ्गदाङ्गारपर्णप्रभृतिभिरुपासितपादपीठः पर्जन्यो नाम।

यस्मिन्ननतनुजनिततनुतापदवानलपर्जन्ये नासत्यातिशायिलवणिमनि गुणिनां मणौ मग्नमना घृताची ससुरासुरनागं त्रैलोक्यमप्यवमेने, तृणमिव नागणयद् गीर्वाणवर्गनायकस्य भगवतः पाकशासनस्यापि शासनम्, न प्रमाणयामास सुपर्वणां प्रणिपातान्, न स्वीचकार विश्वकर्मणा स्वयंग्राहम्, अमरावतीं परिहृत्य गन्धर्वनगर एव निवासमरोचयत्। तस्य गन्धर्वनायकस्य पर्ज्जन्यस्य घृताचीगर्भसंभवां तनयामवगच्छतु मां प्रियसखी, यां मुद्गलवचनमनुवदन्ती सुकेशिनी काचिदपरा वेदवतीति निर्दिदेश। तस्यां मयि व्यतीत्य शैशवमिदं मध्यममप्यधमं वयः प्रपद्यमानायां मम तातमुदाजहार कुलगुरुस्तुम्बुरुः—महाभाग पर्जन्य ! जानासि स्तोकेनापराधेन चित्राङ्गदायामतितीव्रदण्डप्रणेतरि

विबुधवाद्धको विश्वकर्मणि बालाप्रलापोपजातकरुणाकरम्बितकोपेन वैखानसेन जाबालिपित्रा ऋतध्वजेनात्रेयेण शापं पातयित्वा कपित्वमुपनीते भवतामपि प्रत्यक्षमितः पश्चिमोत्तरे कैलाससानुनि पौलस्त्यस्य विश्रवसो निशाचरीगर्भ-संभवेन पुत्रेण पितृदायादात् कुबेरादलकामाच्छिद्य लवणार्णवतीरे निवासंयितु-मिच्छता दशकन्धरेण मूलादुत्खाते, तद्भुजवनविपुलबलावलोकनप्रसन्नेन भगवता भवेन दायभागव्यवहारादलकां यक्षीपुत्राय, लङ्कां राक्षसीसुताय विभज्यानु-गृहीते पुलस्त्यकुले, शौनकेन कुलपतिना सन्दिष्टमनुसस्मार पुरन्दरः। तदिदमस्म-द्विसर्जनावसरे क्रतुदीक्षितेन नैमिषाश्रमवास्तव्येन मुनिना सन्दिष्टं नास्ति विश्वकर्मणो घृताचीगर्भसंभवमपत्यं विना रावणोत्पातशान्तिकमिति। सेयमा-सन्ना दिविषदां वैश्रवणनामा विपत्। पशुभावतिरोहितदैवतसंस्कारश्च विश्वकर्मा। न च घृताची पर्जन्यादन्यत्र पुरुषे रमते। प्रकृतिस्थमेव कारुप्रवरं नान्वमन्यत, कथमेनं तिर्यञ्चमाश्रयेत्।

अथवा न लङ्घयिष्यति लोकतन्त्रविशेषविदुषी मदादेशमिति विचिन्त्याहूय तव वल्लभामिमामभ्यर्थयमानो बद्धाञ्जलिरेवंविधस्यापि विश्व-कर्मणो वशे तिष्ठेत्यवोचत्।

नियतिपाशगृहीता पुनरसौ न कदापि कपिना रमेय, पातयतु मयि दण्डमनुगृह्णातु वा देव इत्यभिधाय त्वरितपदमपसृत्य हेमकूटमन्वधावत्। ततः शासनभङ्गकुपितः पाकशासनो घृताच्यामपातयद्दण्डम्। एषा यदि कपिभीता मदाज्ञामुल्लङ्घ्य वर्तते तदा किमस्याः प्राणेषु दण्डपातनेन, प्राणाधिकप्रणयिनी दुहितैतस्याः कपिवशे पतत्विति शशाप। तं शापमद्य मयि निवेद्य नारदो मानवस्येक्ष्वाकोर्नगरमयासीत्। सेयमापतिता वो विपत्। न भूतिमतां वचांस्य-न्यथा भवन्ति। कलङ्कितमेतदनया दुष्टगणिकया गन्धर्वकुलम्। त्यजैनाम्। गत्वा प्रभुप्रसादे यतताम्। इयं तु वत्सा वेदवत्यन्तर्वंशिकपुरुषवेष्टितमूलस्य क्रीडामणि-पर्वतस्य सानुनि बन्धुजीवतरोरधस्ताद् गमयतु समयम्, यावदस्य शापाभिचारस्य प्रातिकारिकं चरुमग्नये निर्वपामि। न विद्यते वा दैवीनामापदां प्रतीकारः, नास्ति नियतिर्दुर्विपाकस्य शान्तिकम्, यदि स्यात्तदा नाहरिष्यदेव मदालसा-मस्मदेवोपवनात् पातालकेतुः। अहो! नृशंसमेतत्कर्मानुतिष्ठता पुरन्दरेण क्रूरक-र्मणामग्रणीर्विश्वकर्माप्यतिशयितः, न पालितो दण्डनीतिसमयः, न कदाचिदी-दृशो धर्माम्नायविधिः। अपराध्यति पुंश्चलीनां प्रथमा घृताची, शप्यते पुनरन-पराधमुग्धवया निखिलबन्धुदयामयी वत्सा वेदवतीति।

जानाम्यपहाय दैवतानि कमप्यन्यमभिसर्तुमारभते भुवनसाम्राज्यलक्ष्मीः, येनाविवेकनीलवसनावगुण्ठिता तमोमयीं सरणिमभिधावति हन्त ! तमोदुरालोकमूर्त्तिः, लोककर्णकटूनि कूजति कौशिकः, नूनमासन्नो निशाचराणामानन्दवर्द्धनः समय इति मुनिवचनविरामे हाहेत्यमरावतीमुदपतन्माता, मां तु क्रीडामणिपर्वतसानुसानुबन्धे बन्धुजीवतरुमूले न्यवेशयत्तातः।

तत्रान्तरे चित्राङ्गदतनया चित्राङ्गदया सह नैमिषं गता प्रतिनिवृत्त्य मन्दोदरीपितुर्गृहान् प्राप्तेत्यवरोधाधिकृतपुरुषमुखादुपश्रुत्य पुत्रि ! त्वत्सकाशमानयाम्येनामिति मामामन्त्र्य तातचित्राङ्गदस्य गृहान् प्रविवेश। ततो मन्दोदरीदर्शनोत्कण्ठिता तया सह पितुरागमनवर्त्मनि दत्तदृष्टिरहं नाज्ञासिषम्—किमवनिं विभिद्य निर्गतः, किमाकाशात् पतितः, किमाशामुखैर्निष्ठ्यूतः, शक्रशापमायया तत्रैव वा निर्मितो मातङ्गकलभतुङ्गाङ्गो लाङ्गूलपाशाकर्षणोत्खातशालमूलो वलीमुखवेषच्छन्नो मदभाग्यराशिरागत्य पुरतो मामभीषयत्। ततो भीताऽहमुत्पत्य बन्धुजीवपादपमारुह्य गाढमेकतमां तस्य शाखामालिङ्ग्य नयने न्यमीलयम्।

अथ तस्य हताशस्य कपेरुत्तालहसितवज्रनिष्पेषमायतमरकतस्तम्भपीवरोरुदण्डकरतलास्फालननिर्घोषमुत्खातपादपमूलविशकलितस्खलितशिलाशतसंघट्टतारध्वनिमपविद्धभ्रमद्बन्धुजीवकर्कशच्छदमर्मरारावमतिवेगोत्सर्पदवनिरुहस्तमितं च केवलमश्रृणवम्। अथोन्मूलितापविद्धोत्क्षिप्तमूर्द्ध्वमूलमधःशाखं बन्धुजीवमाश्लिष्याधोमुखी गगनमधावम्। अनन्तरमाशिथिलोत्क्षेपसंस्कारेण यथा सन्निवेशमधः परिवर्त्तितमूलेनोन्मुखशाखेन तेन पतता शाखिना पतन्तमात्मानमुदनयम्। उन्मीलने तु लोचनयोर्भयवशान्न प्राभवम्। अतो न जानामि कियदुत्पपात स पादपः, कस्मिन्नुपरि लोके शशाम तस्योत्क्षेपणवेगसंस्कारः, केन वर्त्मना न्यवर्ततेति केवलमतिशयशिशिरेण शशाङ्कस्य, अतिमात्रमुष्णेन पूष्णो लोकमासन्नमूहमाना पतन्तमात्मानमचेतयम्।

अत्रान्तरे पुनरपि कपिहतककरापवेधभ्रमणाभ्याससंस्कारवशादिव भ्रमणिकामण्डलसहस्रमातन्वति तस्मिन्नगे कुत्रापि वातविवर्त्ते पतिताऽस्मीति चिन्तयन्ती हा ! महेन्द्रातिशायिसंपन्महिम्नो मानवस्येन्द्रद्युम्नस्य महिषी स्वयमेव ब्रह्मण्येयमुपकल्पिता कथमनाथेव विपद्यत इति सिद्धानां वचनमश्रृणवम्। श्रृण्वती तु विद्यते कोऽपि जनसमाज इति विश्रम्भादुन्मील्यमानेन चिरतरपरिभ्रमणिकाघूर्णमानकनीनिकेन लोचनेन कुलालचक्रमिवानवरतघूर्णितमवनिवलयमवालोकयम्। अमुना

च परितो मेरुं परिभ्रमता प्रवहवातावर्तेन भद्राश्वकेतुमालकुरुवर्षाणामुपरि मारममुं च बन्धुजीवपादपं चङ्क्रमयता यावद्भारतं वर्षमनीये, तावदूर्ध्वं-मुखैर्ममाङ्गमस्पृशद्भिः शिलीमुखैश्छिद्यमानसर्वप्रतीकमस्मदाश्लिष्टशाखाशकलावशिष्टं बन्धुजीवपादपं दृष्टवती। कस्येयमतिशयितसुरासुरा शरक्षेपशिक्षेति नयनमधो न्यदधाम्। अवनितलनिहितलोचना च केनाप्युत्क्षिप्तवामबाहुगृहीताधोमण्डलितकोदण्डेनालक्षितगुणसंधानमोक्षणानुपरि क्षिप्यमाणान् पादपावयवलवच्छेदिनो नाराचानपश्यम्। पश्यन्ती तमात्तकार्मुकं जनमनेन शिक्षावशादलक्ष्यीकृतापि शराणामितरेण तदनुकारिणा नयनयोरगोचरेण पुरुषेण पञ्चभिरिषुभिरभिविद्धा मर्मणि मोहमगाम्। अनन्तरं कियदपवाह्य वातचक्रेण पुष्करे पातिताऽस्मीति कमनुसन्दध्यामिह मोहावसाने त्वमेव मम नयनयोरतिथिरासीरिति विरतवचसि वेदवत्यामात्मनो मातृवंशे प्रसूतेति साकूतपरिचया, श्वशुरस्य मनोः सिद्धोदीरणनिर्दिष्टा भवित्री कुलवधूरिति सबहुमाना, बन्धुविरहिता विषीदसीति करुणामयी, महत्यामहमिव विपदि वर्तत इति व्यथिता, संवदतीव मुद्गलवचनमिति हृष्यमाणा, साम्प्रतमर्हामि जीवितं धारयितुमित्याविर्भवदध्यवसाया द्विगुणबाहुवेष्टनेन तां कण्ठे गृहीत्वा तारतरमतिकरुणमरोदीच्चित्राङ्गदा॥

इति श्रीगोकुलनाथसूक्तौ कथायां पर्जन्यकन्याचरितं नाम तृतीयमाख्यानकम्।

---

## चतुर्थमाख्यानकम्

अथापमृज्य बाष्पसलिलमासन्नतरुमूले निषद्य चित्राङ्गदा पप्रच्छ वेदवतीम्—अपि कुशली मातामहो विश्वावसुः ? अपि जानासि मातुरनुसूयायाः प्रवृत्तिम् ? अपि सुखमास्ते चित्ररथस्तत्रभवान् ? अपि वेत्सि मदयन्तीव्यसनदूनायाः सुलोचनाया वृत्तम् ? अपि कपित्वमापन्नस्य तातस्य कमप्युदन्तमवबुध्यसे? किममरावतीमधिवसति ? किमवनौ भ्रमति ? वेपते मम हृदयमेतानि तव मदयन्त्याश्च कपिनोपनीतानि व्यसनानि वितर्कयन्त्याः । मा कदाचिदेवंविधेन महता कन्याकदर्थनपाप्मना लिप्येत कापेयचपलः प्रकृतिकोपनस्तात इति तस्य प्रश्नवचसः क्षणमदत्तप्रतिवचनायामेव वेदवत्याममुष्य पुष्करसरसो दक्षिणोत्तरतटनिषण्णयोर्ललाटन्तपतपनतापद्विगुणविषण्णयोः कन्यकयोराविरासीदावेगाविलः संलापः ।

एकतो भगिनि वेदवति ! येन दैवेनाश्रुतचरवानरवपुर्मयीं मायामास्थाय पितृभ्यां वियोजिते विषीदावः, तदेव पितुरप्यधिकवत्सलस्य भगवतो गालवस्य पादमूलसेवनमपि न सहते । किमेष वरुणगणैराक्षिप्य पातालविवरं प्रवेशितः, उत यादसः कस्यापि गलबिलातिथिर्बभूव, आहोस्वित् समाधिमास्थाय पुण्यतमस्यास्य पुष्करसरसः पयसि निलीय परिहरति दैवदुर्व्यसनपरिपच्यमानमहापाप्मनोरावयोर्दर्शनम् । अयं तु किरणकुकूलानलं किरति भास्करः, न पश्यामि छायामनाश्रितस्य जनस्य प्राणनमिति । अन्यतो मातुलेयि ! मदयन्ति! परवानयमनन्यशरणो जनो यथाभिलषितमार्यायास्तथैव रोचयते । मातापितृविप्रकर्षमापाद्य कौण्डलेयकुलविद्वेषिणा दैवेन तादृशीमापदमुपनीता त्वया जीवितास्मि । काऽहमस्य शरीरस्य, प्रभवति भवती विधेयवर्गस्येति तथाविधं वचनव्यतिकरमाकर्ण्य ससंभ्रममुत्थाय तदभिमुखमधावतां वेदवतीचित्राङ्गदे । त्वरितपदमनुसृत्यातर्कितोपनता चित्राङ्गदा दिष्ट्या वर्द्धावह मदयन्तीदर्शनेनेति वेदवत्या समुल्लासिता दक्षिणपुष्करतटस्थितां मदयन्तीमालिलिङ्ग । मदयन्त्यपि गुह्यकथावेदितलिङ्गसंवादिना स्वप्नसंकल्पकल्पितविलोकनानुरूपेण चित्राङ्गदादर्शनेन कण्टकितरोमा निजस्य कासीति प्रश्नवचसोऽवसरमेव नादात् । एहि सखि ! चित्राङ्गदे ! चिरस्य दिष्ट्या दृष्टाऽसि जीवन्ती जीवितावशेषया मयेति प्रत्यालिङ्ग्य तथा तारतरमतिकरुणमरोदीद्यथा सर्वाण्यपि विपिननिवासीनि भूतानि बाष्पकलुषाननानि बभूवुः ।

अत्रैवान्तरे पुष्करोत्तरतटात् त्वरितमागता कन्दरमालिदुहिता पर्जन्यतनया च वेदवत्यौ चित्राङ्गदा च व्यत्यालिलिङ्गिरे। संविहितसमुदाचाराश्च ताश्चतस्रः कन्यकास्ततो नातिविदूरवर्तिनोऽन्यतमस्य न्यग्रोधपादपस्य छायां तडित इव कादम्बिनीमाश्रित्य क्रमेण हरिता(तां) प्रताप(न)पल्लवासनेषूपविविशुः। उपविश्य चित्राङ्गदा मंदयन्तीमवादीत्—सखि! सुकेशिनीसकाशादधिगतभवद्वचसनाऽस्मि, कथय हिरण्वतीपयसि मग्ना कथमुदतरः? कुत्रैतानि दिनान्यनैषीः? इति त्वाष्ट्रीवृत्तानुयोगमाकर्ण्य दीर्घमुष्णं च निःश्वस्य जगाद मंदयन्ती—

सखि! कपिभयेन हिरण्वतीस्रोतसि रोधसा सह वेगात् पतिताऽहमतिविदूरमधोमग्ना विदार्य घनीभूतं सलिलमन्तर्न्यपतम्। तत्र स्फटिकघटितप्राकारचतुष्टयमुपरिस्तम्भितजलस्त्यानमयपटलमास्थानम्, अस्य मध्ये वज्रोपलविपुलसिंहासने बद्धस्वस्तिकासनाम्, आसन्नपृष्ठदेशाधिष्ठितचामरग्राहिणीकरगृहीतसितचामरयुगवीजनचपलवेणिबन्धाम्, उत्पतितराजहंसमिथुनपक्षवातवेल्लितकलिन्दकन्यासंगमामिव गङ्गाम्, उत्सर्पिताटङ्कशशिशिलाकिरणशलाकयेव चन्दनद्रवललाटिकयाऽलङ्कृतललाटतटाम्, अच्छशरद्वलाहकच्छेदालिङ्गननिष्कलङ्कहरिणाङ्कखण्डमण्डनामिव कौमुदीम्, अवदातसाचिहसितपिहिताधरशोणिमानम्, आपीयमानक्षीरतिरोहितत्रोटिमिव राजहंसीम्, आमुक्तमुक्तालताललितकुचकलशाम्, उत्सिक्तमन्दाकिनीपूरपरिलङ्घिततुषारसंघातामिव हिमवदधित्यकाम्, एकमुन्मिषदतिगौरकान्तिपद्मम्, इतरमुद्गच्छदच्छामृतकलशम्, अपरमसक्दावर्त्तितपरार्द्ध्यमणिवलयम्, अन्यमुद्यदुज्ज्वलनागकरपाशमुन्माथयितदुग्धोदवेलाकल्लोलमिव बाहुमायमयन्तीम्, अगाधनाभिकूपपतनादिव दुर्ल्लक्षमध्यभोगाम्, अनिलोद्धूतकर्पूररेणुपटलश्लक्ष्णशुचिना दुकूलेन निह्नुतजघनोरुम्, उत्सर्पिहराट्टहासावृतकटकामिव कैलासतटीम्, उत्कूजत्कटकमुखरचरणाम्, अमूकमरालतरुणसेविततामरसामिव मानससरःश्रियम्, इन्दुच्छेदैरिवारब्धाम्, अशिथिलपारदरसैरिव पूरिताम्, आपिण्डितकेतकीपरागैरिव कल्पिताम्, उन्निद्रपुण्डरीकदलैरिव विरचिताम्, अपमुद्रकुमुदसंवर्तिकाभिरिव निर्वर्तिताम्, आश्यानपाटीरद्रवपङ्कैरिव निर्मिताम्, अनवकाशकाशकुसुमैरिव घटिताम्, संघातघमघनसारेष्टकाभिरिव निचितापघनाम्, उत्पत्तिभूमिमिव राकाणाम्, आवासकुटीमिव चन्द्रिकाणाम्, आचार्यामिवैरावणवारणतनुश्रियाम्, उपाध्यायामिव भुजगराजभोगविभूतेः, नाभिगृहदेहलीमिव करुणायाः, स्वसारमिव सत्त्वप्रकृतेः, दुहितरमिव दाक्षिण्यस्य, मातरमिव विपन्नानाम्, नानानदीमयपरिवाराम्, अखिलपारावारपरिचरण-

नीशजितचरणाम्, प्रणयकुपितरेवतीमिव मालतीकुसुमदामबद्धवलविग्रहाम्, पल्लवितवनवीथिमिवोल्लासितारुण्याम्, स्थूणामिव कामसखेनापि समयेन रागविकारमप्रापिताम्, उमामिव हिमगिरेः, लक्ष्मीमिव क्षीरसागरस्य, दायादव्यवहारसमुचितं गौरवभावसर्वस्वमाददानां भगवतीं वारुणीं शक्तिमद्राक्षम् ।

सा च तथाविधमेनं जनमवलोक्योभयावकाशबद्धाञ्जलिपुटावस्थितानां मूर्त्तिमतीनां नदीनामन्यतमस्यां पातयामास चक्षुः। विदिताभिप्राया तु सा नदी प्रणिपत्य न्यवेदयत्—भगवति भूतकरुणामयि ! जानात्येव भवती यथा [1]नैकषीतनययोर्दशाननकुम्भकर्णयोरुल्लङ्घितधर्माध्वना चेष्टितेन वेपते ससुरासुरं त्रैलोक्यम्, येन भवत्यपि लङ्कासन्निकर्षभीतभूतग्राममर्णवमपहायेह रहसि हिरण्वतीस्रोतोमूले निवासमरोचयत् । इदं च पातालप्रवेशविवरमाश्रित्य चकितेव (व) वर्तते, तेन हि दैवतानां विपदमाशङ्कमानः पाकशासनः शौनकवचनबोधितो विश्वकर्मणि घृताचीमनुकूलयितुमयतत, न च शशाक पर्ज्जन्यानुरागपाशबद्धामिमां विबुधवार्द्धकिना संगमयितुम् ।

अत्रान्तरे ऋतध्वजशापेन कपित्वमुपनीयमानस्त्वष्टा तस्यामप्सरसि बद्धमना एव दैवतशरीरं तत्याज, नाजहादेनमनया प्रत्याख्यानकाले प्ररूढो मत्सरः, वानरशरीरपरिग्रहाविर्भूततारल्यस्तु तत्काल एव कनकपर्वतादुत्पत्य मम सरितः शालूकिन्यास्तटे निपतता तेन कनकगिरेः स्थूलगण्डोपलेनेव पतता न केवलमहं यावदखिलमवनिवलयमवेपत, न ममैव सलिलानि किन्तु शाल्वेयपर्वतशिखराण्यप्यशीर्यन्त, न परमकाण्डभुवनभङ्गभयचकितान्यूर्ध्वमुत्पत्य यादांस्यधो न्यपतन् परन्तु विपिनश्वापदा अपि, इत्याकस्मिकविपदमस्माकमापाद्य स कपिः शाल्वेयशिखरपातनेन मम सलिलम्, मत्स्रोतसामुच्छलनेन च शाल्वेयमेखलामाकुलयाञ्चकार ।

एकदा गुह्यकराजदुहितरमात्मनो मातुलेयीं मदयन्तीमवलोकयितुमुद्गत्य ममोपकण्ठवर्त्मना गन्धमादनं गच्छन्तीं कौण्डलेयस्य कन्दरमालिनस्तनयां वेदवतीं ददर्श । तां च घृताचीतनया वेदवतीयमिति नाम्नः स्वरूपस्य च सारूप्यादाशशङ्के । ततो घृताचीदुहितरमपकृत्य पातयिष्यामि तस्यां दुष्टगणिकायां प्रत्याख्यानापराधदण्डमिति चिराद्बद्धासूयः कराभ्यामुत्क्षिप्य वेदवतीं दूरमपससार । तं तु यावत्तुषारपर्वतमनुससाराकृष्टकरवालः कन्दरमालीत्येतावदहमद्राक्षम् ।

अपि नाम सैवेयं वेदवती हिरण्वतीपयसि तेन कपिना प्रक्षिप्ता भवेदिति शालूकिनीवचनमाक्षिप्य काप्यपरा नीलोत्पलकिसलयद्युतिरनिललीलाताण्ड-

---

१. निकषस्यापत्यं स्त्री नैकषी, राक्षसीत्यर्थः ।

वितविकचपुण्डरीकलोचना ताटङ्कमणिकिरणधोरणिरमणीयं विधूय मूर्द्धानमुदाजहार—देवि ! मृषोद्य एष शालूकिनीवितर्कः । कन्दरमालिदुहितरं वेदवतीमृतध्वजाश्रमे निक्षिप्य स वानरो ममाम्भसि ममज्ज । मया तु कुपितया बलवता प्रवाहवेगेनापवाह्य दूरमनीयत । ततो बलादुन्मज्ज्य प्रतिस्रोतः प्लवमानो मया सह संगच्छमाने हिरण्वतीस्रोतसि प्रविवेश । अथ कन्दरमाली मयि कालिन्द्यां मज्जता प्लवङ्गमेन सह तनयाया अपि प्रणाशमधिगत्य विलपन्नेव कनकपुरमविशत् ।

वेदवत्यपि शून्ये तस्मिन्नृतध्वजाश्रमे कपिकरनियन्त्रणाव्यथितेन कुसुमसुकुमारेण स्वजनविरहविक्लवेन वपुषा मोहमगान्नाद्यापि प्रत्युज्जीवतीति वादिनीमभिनवाभ्रखण्डमेचकरुचं यमुनामुत्सर्पिणीभिरमृतनिष्यन्दावदाताभिरुन्निद्रातिमुक्तकुसुमपरागपटलाभिजाताभिराश्यानपाटीरद्रवपङ्कधवलाभिर्देहदीधितिभिः, धरणिच्छायामिव शशधरकलाभिः, नारायणमूर्त्तिमिव क्षीरसागरकल्लोलैः, इन्द्रनीलप्रतिमामिव घनसारघनविलेपनैः, मङ्गलकलशमुखनिहिततमालपल्लवावलीमिव दुग्धधाराभिषेकैः, अधररुचिसन्ध्यारागरञ्जितमुखीं रजनिमिव चन्द्रिकाभिः, कालिकामिव हरवरप्रसादैः, शरदागमप्रसन्नाभिराशाभिर्वा, नीलकण्ठस्य कण्ठद्युतिमिव, अट्टहासैश्चिकुरलेखामिव, पलितैरिन्दीवराकरश्रियमिव, मानससरस्सलिलोच्छ्वासैरुज्ज्वलिमानमानयन्ती सव्ययोरुपरितनेन प्रसृतविरलाङ्गुलिनोत्तानेन करतलेन विकचकोकनदेनेव निपीयमानं बालातपच्छेदम्, अमृतसारपूरितान्तरतया मासावसानसंक्रान्तसोममण्डलं प्रभातमार्तण्डबिम्बमुपहसन्तम्, अन्तःप्रविष्टसत्त्वशुचिहृदयब्रह्मविग्रहानुहारिणम्, अलक्तरसलोहिनीभिर्मरीचिवीचिभिः परिवाहिणम्, सरस्वतीपूरमिव कालिन्दीसंगमादधिकपावन्या गङ्गया संगतम्, अनङ्गारेरुत्तमाङ्गजटापाशशोणिमानमिव तरङ्गपाणिना परिमार्ज्य पिण्डीकृतं माणिक्यकलशम्, इतरेण वामशयकुशेशयेन सजातिप्रीत्या समागतमिव नित्यनिर्निद्रं विरहपाण्डुरकेरलीगण्डमण्डलविडम्बिपुण्डरीकमावहन्ती, दक्षिणाभ्यामुन्मिषितवदनचन्द्रचन्द्रिकासंकुचितावर्जितनालाभ्यामिव कमलाभ्यामभयवराभिनयललिताभ्यां हस्ताभ्यामनिलवेल्लनवलितपल्लवावलिविषमविटपेव लवलिवल्लिः, उल्लसितसितदुकूलदोलनतरङ्गितोत्तालतनुप्रभाप्रवाहा, पक्षधूननचपलराजहंसकुलसंकुलामपरामुदकमयीमात्मनो मूर्त्तिमनुकुर्वती मुक्तावलिभिरुपलक्षितेन वक्षसा। साक्षादिव निरीक्ष्यमाणा मोक्षलक्ष्मीः, अनुरूपरूपा, वरुणशक्तेस्त्रिविक्रमोरुदण्डध्वजपताका, भगवती भागीरथी संसारनाटकभूमिकापरिग्रहविडम्बनोपसंहरणवृत्तिभिरिवाद्भुताभिरपवर्गरङ्गस्थललास्यसूत्रधारीभिरश्रुलवतुषारपातादवमीलन्तीभिर्दरदलदरविन्ददलसोदराभिर्दृष्टिभिरवलोक्य शशंस—

प्रियसखि ! कालिन्दि ! वेत्ति भवती कनकपुरपरिसरेण पातालमनुविशन्तीं त्रिपथगाया मम तृतीयामुदकमयीमिदानीं वेदवती-व्यसनशोकविक्लवां भोगवतीं नाम मूर्तिम् । यत्र पुलिनेषु वेदवतीकर-किसलयविरचितानि पांशुक्रीडनकक्लृप्तसदनानि[1] सेवन्ते परित्यक्तमृणाल-कवलानुबन्धा निरीक्ष्य शून्या दश दिशो जललवलुलितलोचना दैन्यदीर्घघर्घर-क्रेङ्कारमुखरमाक्रन्दन्तः कनकपुरपरिवृढदुहितुरमुष्या लीलालसगतविलासोपदेश-गुरवो राजहंसाः । यत्र च कन्दरमालितनयया तथा कर्णालङ्करणाय लूनाग्रेषु कुशेशयकिसलयेषु परित्यक्तमकरन्दास्वादमुन्मुक्तकलक्वणितमावेगकूणितनयन-मासते, न तु तरङ्गवेल्लनाहतितरलिता अप्यपसरन्ति वेदवत्याः क्रीडनकमधुकराः, यस्यास्तटसीमनि सैकतेषु वेदवत्याः पदचिह्नानि नयनोदबिन्दुभिरभिषिञ्चति, श्वासमारुतेन मार्जयति, संस्थानविघटनभिया निबिडमस्पृशता करेण छरयति, दूरप्रणामितेनाधरेण चुम्बति, कुञ्चितचक्षुःपुटावलम्बिना संहतेन पक्ष्मणा प्रोञ्छति, परिवाहेण मा विलुप्येत कदाचिदिति रत्नितुङ्गेन सिकताल-वालेन वेष्टयति, मा कदापि शकुनिपदपातैरपस्क्रियेतेति निजेनोत्तरासंगेना-वृणोति, पुनरतिचिरविरहकातरो दर्शनेन चक्षुर्विनोदयितुमीषद्विवृणोति, निमिष-मपि दर्शनान्तरायमसहमानो विहायावरोधमागतामाक्रन्दमुखरामतिप्रेयसीमपि विरोचनदुहितरमञ्जनां नाम महिषीं न स्पृशति, नानुभाषते, न पश्यति, नाश्वास-यति, कपिहतक ! वत्सामादाय क्व गच्छसि, तदयं न भवसि, हतोऽसि ! हतोऽसि! हा ! कथमटव्यान्तरितः, हा ! ममज्ज वेदवत्या सह पयसि, हता इत्युन्मत्त-प्रलापैरेव वेदयति बन्धुषु व्यसनवृत्तान्तम्, न पुनरसैरनुयुज्यमानं श्रृणोति, श्रुतमपि नाऽवधारयति, न च स्वजनैः प्रणिपातशतेनाभ्यर्थितोऽपि कनकपुरप्रवेश-मभिरोचयते, त्वत्तटाभ्यर्णविवरवर्त्मना प्रतिनिवृत्य निजं जनपदमुपगतः कुण्डला-तनयो वत्सः प्रकृतिसुन्दरः कन्दरमाली, सा मम तनुर्भोगवती न केवल-मात्मनैव वहति, यावदन्यास्वपि मम मूर्तिषु संक्रामयति परितापमिति कथं न ज्ञास्यति मध्यमेन मम वपुषा नित्यं संगत्य लब्धप्रतिष्ठाना प्रियसखी । ननु प्रकृतिकृपणे ! वटमेकमक्षयतामानेतुं मया सपत्न्या संगताऽसि, न तु सखीभावेन, निसर्गमलिनजीवने ! स्वसारूप्याय ममापि जीवनं मलिनयसि, न तावदुज्जीवयस्या-सन्नमूर्च्छितां वत्सां वेदवतीमिति गङ्गया निगदोपालम्भमाकर्ण्य निजगाद यमुना—

भगिनि मन्दाकिनि ! केन मामनवधानां मन्यसे, यथा त्वमस्यां कन्दरमालिनस्तनयेति वत्सला तथा ममापि सत्यध्वजवधूरिति, जाबालि-

१. सदनं जलम्, "सदनं मन्दिरे तोये" इति कोशः ।

सधर्म्मिणी परिकल्पिता देवैरित्यधिकतरं विद्यते प्रीतिः, अतिदीर्घमोह-निद्राविचेतनामेनामुज्जीवयितुं वीजयामि तरङ्गवातैः, प्रेरयामि तद-भिमुखमाकृष्टपुण्डरीकपरागसुरभीनम्बुशीकरान्, उच्छ्वासैरार्द्रयामि परिसर-मृतध्वजाश्रमस्य, किन्तु दुर्लङ्घतया विधिनियोगस्य प्रतिविधातुमक्षमा किं करवै, न गालवमृतध्वजं वा विना विद्यते तृतीयस्य मृतप्रत्युज्जननी विद्या, दैववशाद् दूरविप्रकृष्टौ पुनरेताविति विरते यमुनावचसि कयाप्यपरया वारुणीं शक्तिमुद्दिश्येदमभ्यधीयत—

स्वामिनि ! सत्यमाह तरणितनया, न खल्वसौ वेदवती, किन्त्वधुनैव तेन कपिनानुद्धृत्य रोधसा सहा मम सलिले पातिता गुह्यकपतेरञ्जनस्य दुहिता मदयन्तीयमिति तामभिदधानामेव नदीनामन्यतमा—कुटिले हिरण्वति ! कथमस्याभिजातकन्यकाजनस्य पयोमज्जनव्यसनमापादयन्ती न लज्जसे ? किन्न पश्यसि विश्वकर्मदुहिता चित्राङ्गदा न मया नानया गोमत्या पयसि मज्जिता, मज्जिताप्येतया सरस्वत्यायथाभिमतमुद्देशमुपनीता, गोदावर्यप्यमुया समुत्क्षिप्य सैकते निवेशिता, धिगस्तु प्रावृषेण्यप्रवाहवेगगर्वविप्लुतचेतनां त्वामित्याचिक्षेप ।

तामाक्षिपन्तीमचिरधौतराजपट्टरुचिरमेचकद्युतिः, आजानुलम्ब-कर्कोटकभोगविकटबाहुः, अनुरक्ततटिनीजनकुटिलकटाक्षपीयमानलवणिमा, लवणनीरनिधिरीषदुत्तम्भितकुटिलभ्रुवा किञ्चि(दा)विर्भवत्पाटलप्रभापटलया भ्रमरमण्डलानुविद्धबालातपच्छुरितपुण्डरीकदलदीर्घया दृशा विलोक्यानुश-शास – चपले ! निरपराधसुरथापवाहनमहापातकिनि ! काञ्चने ! कथमेनामपवदसि, प्रकृतिरियमपां यदमूस्तृणमपि मज्जयन्ति, किमुत गुरूणि प्राणिनां शरीराणीति । नहि, प्रकृतिपरित्यागपाप्मना यूयमेवापराध्यथ न तु निसर्गस्थिता हिरण्वतीति विरतवचसि सागरे चुकोप विपन्नजनकरुणामयी वारुणीशक्तिः— अरे क्षारमयमलिनप्रकृते ! हृतसार ! निशाचरकुलसन्निकर्षात् त्वयि संक्रान्ता नैर्ऋतिप्रकृतिः, अनुकम्पया परित्य-क्तोऽसि, सलिलस्य वस्तुमज्जनशक्तिं श्लाघमानो वि(ध)कल्पसे, तदनुभव विपन्नजनकरुणया परित्यक्तो नृशंसतायाः फलम्, उल्लङ्घ्य च गोष्पदमिव कपिभिरासादय चिराय दृढतरं बन्धम्, अपैतु कस्मिन्नपि समये शिलानामपि मज्जने तव शक्तिरिति शशाप, प्रापयैनामखण्डविग्रहामात्मनः कच्छमिति हिरण्वतीमादिदेश ।

सा तदादेशसमनन्तरमेव मामुत्क्षिप्य तटनिकटसैकते निचिक्षेप। तत्र पतिताहमपरतटसीमनि चक्षुर्व्यापारयन्ती न कपिं न सुकेशिनीं न तातमपि तु पूर्वंपतितस्य रोधसोऽनुमार्गेण पततोऽपरानपि प्रपातखण्डानपश्यम्। नूनं तेन कपिहतकेन तातः सुकेशिनी च पयसि प्रवेशिताविति मनसा निश्चित्य मुहूर्त्तमचिन्तयम्— अहो! नृशंसतमा प्रकृतिरस्य दैवस्य, येनाहमन्धा(म्ब)या तातेनार्यया सुकेशिन्या च वियोजिता न तु प्राणैः, विपदा संयोजिता न तु चित्राङ्गदया, बन्धुस(सं)मानं त्याजिता न तु चेतनादुर्विपाकम्, अम्भसो गर्भे प्रवेशिता न तु मरणमहोत्सवे, युज्यते वा नियतिदुर्विपाकगृहीतां प्रियसखीं चित्राङ्गदामनुसरन्त्या मम तदवस्थानुकरणम्, एनां तु वेदवतीमेव केवलमनुशोचामि, या मम कृते तादृशं व्यसनमासाद्य विजनविपिने मूर्च्छिता नाधुनाप्युच्छ्वसिति, कथमेनां संभावयेयम्, अविदितचरो मया सत्यध्वजाश्रमाभिगामी पन्थाः, न च पश्यामि कमपि, कस्य कथयामि निजामापदम्, अयि मातः! प्रणयकातरे! मया हताशया पत्युरप्यवस्थान्तरमनुभाविताऽसि, हा तात! कथावशेषोऽसि, नूनमनाथा सम्प्रति गुह्यकनगरी, वराकी सुलोचना कमवलम्ब्य वर्त्तताम्, अशरणा हताशा मदयन्ती कमुदाहरतु तातेति, केनाङ्कमारोपिता शृणोतु चाटुशतानि, कस्मै दुरवापवस्तुप्रार्थनाभिनिवेशिनी मृषामन्योरभिनयेन कृतकमसूयतु, कस्मादुपलभ्य क्रीडनकलालनानि प्रसीदतु, कस्य कराङ्गुलिमालम्ब्योपवनेषु भ्रमतु, कस्मिन्ननपेक्षितपूर्वापरप्रबन्धसम्बन्धमभिदधातु, कः प्रापयतु मामिदानीं गन्धमादनम्, अथवा सप्तगोदावरमित्यसकृदाकृश्य यदृच्छया दक्षिणपूर्वां दिशमभिप्रास्थासिषि, प्रस्थिता च कियतान्तरेण कोशलं नाम जनपदमासाद्य तत्र सिकतामयोद्घातविषमायामवनौ शिथिलपदक्रमा शनैरगच्छम्।

अत्रान्तरे तुङ्गतरगगनगिरिमध्यमशिखरमारोहतो हरिताश्वस्य युगपदखिलाभिरेव रुचिभिरवलम्बिताः कराः, मुहूर्त्तमारुह्य विश्राम्यतः समवाह्यन्त पादाः, नूनमाक्रम्य मूर्द्धानमवनमयांबभूव व्योम विवस्वान्, उत्क्षिप्य वा रश्मिभिरुपरि निनाय मेदिनीम्, अन्यथा कथमासन्न इव तापयामास, किञ्च मेरुमयमेढि(धि)सुदृढासक्तरश्मिबद्धेन प्रतोदग्राहिगरुडाग्रजप्रेरितेन खलखलीकारकुशलेन परितः परिभ्रमता गवां नायकेन पादपातैर्दमिता नक्षत्रसस्यमञ्जर्यः पलालधूसरैरात्ममिरुपर्यवर्त्तन्त, तेजस्सारबीजानि पुनरवनौ व्यकिरन्, एनान्येव तप्तवालुकारेणव इति जना व्यपदिदिशुः।

अपि च नैकतमकाष्ठाश्रितस्य विभावसोस्तथा ज्योतिरज्वलद्यथा मध्यस्थतया सर्वककुभां मुखानि विकाशयतः, तेन जानामि काष्ठाना-

मुच्चयोऽयं यं गगनमध्यमुदाहरन्ति, किं वा न सहते महामहसो जनस्य तेजस्वितां बहुषु परिग्रहेष्वेकत्रैव दृढः प्रणयवन्धः, निदर्शनमत्र रोहिणीमाश्रित्येतरास्तारकाः परिभवन्ना(न्न)मया त्रिना(श)मुपेतो भगवानिन्दुः, जानामि मास इव दीर्घो बभूव स वासरो यस्य मध्यमध्यास्य निजश्वशुरकोपतप्टेन सर्वेण तेजसा पुनरिव संगत्य पूर्णतामुपगतो देहमस्य स्वजनविरहाधिवाधाविधुरस्य जनस्य विधुरिव मिहिरो ददाह, मन्ये मासावसानप्रविष्टसोमसुधानवनीतद्रवपूरिते सप्ताश्वतप्तकटाहमण्डले प्रक्षिप्ता मुनिजनार्घोदबिन्दवो ज्वालामवर्धयन्त, अवबुध्ये विबुधवार्द्धकिंकरपरिमार्जनवर्तुले गगनाङ्गनक्रीडनकदारुकन्दुके प्रविविशुरुडुघु(ग)णाः, यैः खण्डितविप्रकीर्णो रवेरन्तस्साररेणुरखिलजननयनमन्धतां नयन्नस्तीर्यत भुवि मध्याह्नमरुसिकताकैतवेन, ध्रुवममी भुवनभ्रमणखेदनिस्सहाः संज्वरमेदोविवृद्धिशोथगुरवो विकर्त्तनस्य पादाः सैकतेषु तथा ममज्जुः, यथा प्रयत्नशतेनाप्युद्धर्त्तुमक्षमोऽसौ किं करोतु, मध्येनभोमार्गं निषसाद, वेद्मि संज्ञयैवायमुपदर्शितः कपटवाटः, येन संचरमाणा मरीचिमालिनो हृदयङ्गमा रुचयो निजमाभासमस्य सविधे निधाय स्वयमतिदुर्गासु वालुकाभूमिषु निलीयावतस्थिरे ।

तदद्यापि चिन्तयन्ती बिभेमि यथा ललाटन्तपतपनत्विट्क्रूपीटयोनिभृष्टसिकतामयीषु, कुम्भीपाकपावकक्वाथानुकारितरुणार्ककिरणचक्रपुटपाकव्यथाकुन्थितमुखेन श्वासविषधूमधारामांसलितमरीचिकेन, निष्टापद्रवदुदरवसाविस्रगन्धिना, शिलासंघातविततपृष्ठदेशाधिष्ठितानेकसत्त्वद्विगुणगुरुणा, तर्षार्तिलोलरसनयुगलावलिह्यमाननासाविलेन, विविधतनुभङ्गिप्रवर्त्तनव्याकुलेन, प्रतिसूर्यकपीयमानस्वेदसलिलेन जरदजगरकुलेन विषमभीषणासु, मरीचिकामोहधावितेन, ज्वलदूरुदघ्नवालुकानलजम्बालमग्नेन, जीवितनिराशया शितिकुशेशयदलदीर्घया जललवलुलितया दृशा नरस्परमवलोक्य श्वसता तरुणहरिणमिथुनेनातिकरुणासु, मदसलिलपातधूमायमानसैकतानलैः, आमूलमग्नचरणस्तम्भैः, तथाविधस्तम्भपरवशवशापुष्कराग्रस्पृष्टकण्टकितकपोलपालिभिः, उत्पतितकपिलोकाधिष्ठितपृष्ठचत्वरैः, आयतश्वासपूरितोच्छ्वसितमण्डलितशुण्डारदण्डैः, विधुताधोमुखमूर्द्धभिः, दर्पदुर्द्धरदशनदारितवसुन्धरोत्कीर्णरेणुमुर्मुरैः करेणुपतिभिरतिदारुणासु मरुस्थलीषु क्रकचक्रूरपाषाणकर्करप्रकरपाटितेभ्यो निष्टप्तसैकतस्पृष्टपादतलोद्भूतेभ्यः स्फोटेभ्यो विगलिताभिर्वसाभिर्मसृणसिमसिमायितामात्मनः सरणिमकरवम् । यथा च क्वचिदुत्पतिता, क्वचिन्निपतिता, क्वचिदुत्प्लुत्य दीर्घमजगरपृष्ठपथमारूढा, क्वचित्करिकायच्छायसरणिसंचारिणी, क्वचि-

च्चरणाभ्याम्, क्वचिज्जानुबन्धेन, क्वचित्कराभ्यां लास्यशास्त्राभ्यासशिक्षितया वृश्चिकगत्या, क्वचिदवस्तृतोत्तरासंगनिहितेन पदेन, महतीं मरुमेदिनीमलङ्घयम्।

अथासाद्य शाद्वलमयीं गोमतीसन्निकृष्टामवनिमनि(नति)दूरादेव मरकतमय इव पर्वतः, हरितहयहयानामिवोत्पत्तिलोकः, हारीतपतत्त्रिपत्त्रव्रातैरिव विरचितावयवः, रविकरसंज्वरसंकुचितानां हरितामिव हरितासवर्णः पर्णोटजः, मध्यन्दिनमिहिरमरीचिमुषितजनलोचनानामिव निक्षेपनिधिः, अनिलवेल्लितशाखावकाशवदनेन पीत्वा जरयन्निव ललाटन्तपतपनतेजसो राशिम्, आशामुखेषु मार्जयन्निवायतविटपबाहुकिसलयाङ्गुलीनामास्फोटनैरर्ककिरणरजोमलिनिमानम्, उद्वीजयन्निव लम्बितलताप्रतानतालवृन्तवातेन विवस्वदंशुदवथुदूनामवनिम्, उज्जीवयन्निवानवरतनीहारबिन्दुवर्षणचणया तरलदलवलयजलार्द्रया विकर्त्तनमयूखमण्डलानलदाहभयेन शरणप्रप(व)र्णमिव विततप्रारोहपटलान्तराले निलीयावस्थितमाकाशम्, उत्तरलशिम्बिकशादण्डताडनेन प्रेरयन्निव, गगनमध्यमध्यास्य विश्राम्यतो रवेरर्वतः सर्वतः प्रसृतेषु पादेषु गृहीत्वा चरमाचलशिलापीठे पोथयितुमिव, लोकलोचनोपप्लवाय तपन्तमादित्यमत्यायतान् विटपबाहूनाशासु विस्तारयन्नभिनववधूवयोविकार इव अदृष्टपुष्पोदयोऽपि भुजङ्गमसंगमसहः, धूर्जटिरिव जटाभिरत्यायताभिरुपचितः, धुर्यवृषभ इवानेकयुगदारुभरसहस्कन्धः, निपातवर्ग इव तुहिनप्रायो महानदृश्यत मया न्यग्रोधतरुः।

एनमवलोक्य त्वरितपदमुपसृत्य रविकरैरस्पृष्टचरे, घर्मैरदृष्टपूर्वे, पेलवदूर्वाप्रतानास्तरणसनाथे, धरणिबद्धमूलप्रारोहप्रकाण्डस्तम्भमण्डलोत्तम्भितच्छदमयच्छदिषि, हेमन्तनिवासगर्भवेश्मनीव, शिशिरश्रीरासभवन इव, चन्द्रलोकलक्ष्मीस्वयंग्राहमण्डप इव, हिमसंघातोपलघटितकुट्टिमाट्ट इव तस्य वटविटपिनो विटपसद्मनि प्रविश्य व्यश्राम्यम्। अपगतक्त(क्ल)मा तु प्रारोहपटलपञ्जरान्तरितविग्रहेण केनापि कलकरुणप्रलापिना बालेनासकृदुद्बुध्यमाणा(ना)मार्यामिमामश‍ृणवम्—

आरादुद्घातमयीं परिहरति मरुस्थलीमिमां पथिकः।
अथ कः कथयतु दूरस्थिताय ताताय मम विपदम्॥ इति।

शकुनिशिशुभिरपि परित्यक्तफलशकलग्रासैः, अजगरैरपि कोटरक्रोडादुद्गत्य करुणया स्तम्भितैरश्रुकलिलेन चक्षुषा श‍ृण्वद्भिः, यक्षमिथुनैरपि शोकमलिनामिमामार्यामाकर्ण्य (विदीर्णहृदयैः), द्विगुणप्रवृद्धबाष्पवेणिकमिदं चक्षुरितस्ततो निक्षिप्य विटपान्तरालविवरवर्त्मनि व्यापारयम्। अथोर्ध्वमुखशाखा-

शिखरे प्ररोहवरत्राव्रततिव्रातमयपञ्जरे प्रक्षिप्तमायतजटापाशदृढग्रथितवटविटपाग्रमनपेतपञ्चहायनवयसमोजसा कल्पकालदिवाकरकरमण्डलकडारेण पल्लवैरिव वनस्पतिमेनमनुपूरयन्तमशरणमाक्रोशन्तमापदि पतितं शिशुमपश्यम् । तत्कालाविर्भूतकरुणरसद्विगुणितावेगवेगा तु मङ्गलमुख ! कोऽसि ? कस्यासि ? कथमेनमासादितोऽसि मरुविभागम् ? अथ केन दारुणेन दारुणि बद्धोऽसि ? कस्तव पिता ? कुत्र जनपदे तिष्ठति ? केन वाटेन गत्वा तमासादयेयम् ? अमुमुदन्तमावेदयेयम् ? इति तं बालमपृच्छम् ।

असौ तु बहुतिथात्तिथेराकर्ण्य मानुषवैखरीमतिमात्रप्रमोदविस्फुरणप्रसृतकिरणच्छटाभिरालिङ्गन्निव माम्, उद्गच्छदच्छदशनद्युतिज्योत्स्नामृतेनोपपादयन्निव पाद्यम्, आविर्भूतबाष्पसलिलया दृशा कल्पयन्निवार्घम्, इदमुदग्रमन्युगद्गदमुवाच— स्वागतमतिथिरत्नाय, भगवान् स्वायंभुवो मनुरातिथेयपरमाणामकिञ्चनानामातिथ्यविधये पर्याप्तानि चत्वारि सर्वसुलभानि वस्तूनि विदधे— तृणम्, भूमिः, उदकम्, सूनृतं वचश्चेति । तेषु तृणीकृत्यात्मानमेव तव पादयोः पातयामि, हृदयभूमिमेव तवासनायोपकल्पयामि, नयनोदकेन तवोपपादयामि पाद्यविधिम्, अनया च सूनृतया गिरा तवावेदयामि निखिलमात्मनो वृत्तम् । अवदधातु भवती—भगवतः प्रजापतेरत्रेस्त्रिषु पुत्रेषु दक्षकोपप्रसूतेन यक्ष्मणा क्षीणरोचिषि, गुरुदारधर्षणकलङ्किते, दोषानुसरणगर्हणीयचरिते, गगनमुत्पत्य खगभावमाश्रिते सोमे, विहाय त्रयीतन्त्रमवधूतवेषमास्थाया-(य) भुवमभितो भ्रमति वारुणीमदमत्ते भगवति दत्ते, त्रिवर्गनिसर्गवैरिणा कोपपावकेन दग्धतपोबले, मैत्रीं नाम ब्राह्मणस्य ब्रह्मवर्चससर्वस्वमवधीर्य नैर्ऋतीं प्रकृतिमातिष्ठमाने मुनौ दुर्वाससि, तनयानामप्रतिष्ठानमवलोक्य निष्कलङ्कमदोषानुषङ्गिणमविप्लुतब्रह्मचर्यमनतिकोपनं चतुर्थमात्मजमाशशंस भगवत्यत्रिकलत्रमनुसूया । तदाशयमनुसन्धाय यथाभिलाषमाप्स्यसि सुतमिति वरेण छन्दयामास मरीचेरवरजो भगवान् प्रजापतिः, आजुहोच्च सामिधेनीसमिद्धे हुतभुजि रौद्रं चरुम्, अनुसूयागर्भं च संचस्कार पाशुपतैर्मन्त्रैः ।

कतिपयैर्वासरैरस्मादेव प्रजापतिसधर्मिणीगर्भादाविर्बभूव नैसर्गिकभस्मललाटिकालङ्कृताननः प्रकृतिसिद्धजटाजूटमण्डितमूर्द्धा तदेकमृतं ब्रह्म सर्वोऽप्यनृतः प्रपञ्च इति सामोपनिषदो गायन्नलौकिकलक्षणः कुमारः । यस्मादृतमिति व्याहरन्नेव जातस्ततोऽयमृतध्वजव्यपदेशमर्हतीति सधर्मिणीमादिदेश त्रिदशवर्गगुरुरत्रिः । सोऽयमात्रेयोऽनुसूयागर्भसंभवो भगवानृतध्वजो नाम प्रधानमूर्ध्वरेतसामपरिग्रह एव मध्यमं वयो गमयामास । चरमे तु वयसि नापुत्रस्य लोकोऽ-

स्तीति चिन्तयन्नायतं निःशश्वास। तस्य निःश्वसतो नासिकाविवरादेतावन्मात्र एवाहमाविरासम्। आविर्भवति मयि जातो बाल इति प्रहर्षेण जगाद मम पितेति जाबालिरित्येव मामभिदधे पृषोदरप्रभृतिरखिलो मुनिगणः। ततस्तातो मामब्रवीत्—जात! प्रीणयसि मामनेन वयसा परिमाणेन च, तेन समाशतमेवंविध एव तिष्ठ, ततः परमकाण्ड एवासादितकठोरयौवनो दारान् परिगृह्य गृह्यमेधविधिमाधास्यसीति।

सोऽहं पञ्चहायनवया इवोत्पन्नो वत्सरद्वयान्ते कृतोपनयनसंस्कारः प्रतिवेदं द्वादशाब्दानाचार्यस्य पितुरन्ते न्यवसम्। एवं पूर्वस्य शतार्द्धस्यान्ते समावृत्तविद्याव्रतः स्नात्वा पितुरभिवन्द्य पादौ निखिलमवनिवलयमालोकयितुमाश्रमात् प्रस्थाय प्रथममुत्तरां ततः पूर्वां दिशमभिभ्रम्य दक्षिणस्यां भारतस्य वर्षस्य मध्ये नगरीमयोध्यां नामाध्यगच्छम्। अमुत्र वैवस्वतमनुवंशवर्द्धनेन वृद्धेन राजर्षिणेक्ष्वाकुणा देव्या च शैव्यया तनयनिर्विशे(षमात्मस)दने निवासितो बहूनि दिनान्यगमयम्। इक्ष्वाकुकुमाराणां प्रथमो युवराजः शकुनिर्मा न निशि, न दिवा, न स(न्ध्य)योः, नास्थाने, न क्रीडामण्डपे, न शयनसदने, न भोजनागारे, नोपवनविहारेषु, न मृगयासु मां तत्याज। छायामिव मामनुव्रजन्तमात्युवे(त्मचे)ष्टितान्यनुकारयाञ्चकार। कदाचिन्मया सह त्रयीपारायणमावर्त्तयामास, जातुचिद् गान्धर्वशिक्षाकौशलानि, कथाप्रबन्धान्, इतिहासवार्ताः, काव्यगुणदोषपरीक्षणानि, प्रवह्लिकामर्मविज्ञानानि, चित्रनिर्माणकलाः प्रवर्त्तयाम्बभूव। कदापि पूर्वापरपक्षपरीक्षाविशुद्धाभिरणुगुणगणद्वित्वापेक्षामतिप्रभवक्षयक्षणगणनचणाभिरान्वीक्षिकीकथाभिरक्षपयत क्षेमेण क्षपाः, बहुधा वर्षान्तरसम्बद्धया कथयातिश्रद्धमास्त(स्ते)। तेनाहमनवसितभुवनवलयदिदृक्षाकौतुकोऽपि तस्य प्रणयपाशैर्बद्ध इव, विनयभारैर्यन्त्रित इव, निसर्गशीतलशीलसलिलावसेकजडिम्ना स्तम्भित इव, पदात्पदमपि गन्तुमपारयम्। आश्चर्यचित्रीयास्तिमितलोचनस्तमेव केवलं निर्वर्णयन्नचिन्तयम्—

अहो! महनीयमिक्ष्वाकुनन्दनस्यास्य किमपि माहात्म्यम्। असौ हि न नासत्ययोरुपमानमर्हति, नैव पशुगर्भसंभवेनास्य कामेन रूपणमनुरूपसम्पदः, न ह्ययमदृढधन्वा, न कूटयोधी, न व्यसनिषु निर्दयः, न पेलवबाणः, नैनमु(प)हरति परदारपरिहारिणं वारवनिताप्रणयमन्तः पुरूरवाः; दिगम्बरकुमारस्य क्रौञ्चदारणे पर्याप्य विश्रान्ता शक्तिरेतस्य सर्वोर्वीसार्वभौमसंभवमत्तकरटिकटकटाहतटकूटपाटनप्रकटपाटवामतशयितसुरासुरां शक्तिमनुकरो-

तीति का कथा । जानामि पराजितान् विजयमानाः परे परश्शताः सन्तु नरपतयः, न तु तैरयमुपमातुमुचितः, यतो यौवराज्यसंपदा जयन्तमपि जयति करजेन रम्भात्वचमुल्लिख्य विषमसायकसमरशूरमात्मानं मन्यते कुबेरकुमारो नलकूबरः, स कथमेतस्य तालतरुलवनलीलाकुशलकरवालकरालभुजाभोगस्य भजतु प्रतिमल्लताम् । अन्ये ते शकुनयो येषामधिपः सपत्नीजनदास्यदूषिताया दयित-दुर्भगाया गर्भसंभवः खञ्जावरजः खगः, यः पुनरभिजातराजप्रियमहिषीप्रसूतो दिगन्तविजयजाङ्घिकानामिक्ष्वाकुकुमाराणामग्रजोऽसौ शकुनिस्तस्य कलामपि न गरुत्मानर्हति, कुतस्तमामधिपतिपदम् । न ह्येष मानवनन्दनो वामदक्षिणयो-रुभयोरपि पक्षयोर्निर्भरविस्रब्धोऽर्ज्जयत्यहिभयम्, अथवा परपुरुषनित्यदृष्टपृष्ठो भवति । न चायमाकाश इव हरिपदाक्रमणभुग्नकन्धरः, प्रत्युत कति हरीनारुह्य दिगन्तरेषु भ्रमति, न चाजन्मनो भुजङ्गभोगविद्वेषी स विषभभ्यवहरतीति चिन्तयतो मम करमादाय करेण पितुरन्तःपुरं प्रविवेश शकुनिः ।

तत्र च वेत्रासनोपविष्टस्य भगवतो ब्रह्मयोनेर्नारदस्य चरणावुपसंगृह्य संवाहयन्तमवनावासीनमासन्नप्रणतसधर्म्मिणीसहायमूर्वीभुजमिक्ष्वाकुमपश्याव । विनयेनाभिवाद्य वृद्धौ ब्रह्मर्षिराजर्षी नातिदूरस्तो वद्ध्वाञ्जलिमासीनयोरावयोरि-क्ष्वाकुरिदं वचो मुनीनां प्रवरे न्यवेदयत्—

महामुने ! हिरण्यगर्भनन्दन ! प्रत्यक्षनिरीक्षितसर्वसमर ! स्मरसि वृषपर्वणा सह प्रवृत्ते सुपर्वपतेः पुरन्दरस्य संगरे दुरात्मना तारकेण रण-शिरसि पातिते वत्से सुदेवे तमनुगन्तुमेव स्वरथादवप्लुत्योत्पत्य दनुतनयस्य विप्रचित्तेः स्यन्दने न्यपतम् । अथ किं करवै ? प्रभोः पाकशासनस्य प्रताप-महिमैव ममानुजानुगमनवर्त्मन्यन्तरायो बभूव, येन स दानवो न मम प्राणेषु न प्राहरत, प्रत्युत रथमपहाय पार्ष्णिग्राहाणामनीकं प्रविवेश । तदवधि सुदेवनिधना(न)विधुरोऽपि वंशधुरां वोढरि सुरथे निवेश्य नयने व्यनोदयम् । अधुना तस्मिन्नपि विश्वकर्म्मणा दैवेन वा दुर्विभावां गतिमुपनीते, परित्यज्य नृशंसतममिमं क्षात्रगृहमेधमारण्यको निःश्रेयसाय समाधिमभ्यस्येयमिति मम मनसि विपरिवर्तते मनोरथः । न चेदमकाण्डे वैखानसव्रताश्रयणमनुमन्यते देवी शैव्या, मन्त्रयते च वत्सस्येन्द्रद्युम्नस्य प्रतिष्ठानपतेरप्यप्रतिष्ठानमेव, कलत्रं हि गृहमेवप्रतिष्ठानमाहुः । दैवे-न चायमुत्सादितस्सु(तः सु)देववंशः । दण्डसुशर्मणोरग्रजस्य समावृत्तविद्याव्रत-स्नातस्यापि वत्सस्य शकुनेर्धर्मदारपरिग्रहरहितमेव मध्यमं वयः, न च वंश-मनीत्वा प्रतिष्ठामावसन्ति वैखानसाश्रममाम्नायविशुद्धबुद्धयो गृहमेधिन इत्य-

स्मिन्नात्रयोर्दम्पत्योर्धर्मकलहे भगवानत्रभवानतिगहनसंशयग्रन्थिच्छिदुरः प्रमाणमिति विरतवचसि जरति राजर्षौ क्षणमनुध्याय सर्वाम्नायसारभूतमुदाजहार नारदः—

नरदेव ! तदिदमेवमेव, यदाह देवी पतिव्रतसमाधिमयेन चक्षुषा साक्षात्कृतत्रैकाल्यवृत्तव्यवहारविशेषविदुषी शैव्या । न युज्यते पाकशासनप्रियसखस्य तव त्रीनपि लोकानुपप्लवितुमिदानीं प्रव्रज्याग्रहणम् । इदं तावदमरधुरन्धराणां मन्त्ररहस्यं यदस्मिन्निक्ष्वाकौ प्रशासति का शक्तिरस्य वैश्रवणस्य रक्षसो मेदिनीमाक्रम्य निगमधर्माध्(ध्व)नीनान् धर्षयितुम् । न क्षमन्ते तामसा जन्तवो राजन्वति जनपदे प्रवर्त्तयितुमीतिवार्त्ताम् । अनन्तरममुष्मिन्नारण्यकव्रतमास्थाय त्यक्तकुटुम्बिताविडम्बने सत्यमुष्यैव परम्परायामाविर्भविष्यति कश्यपः । तस्य तिसृषु भार्यासु चतुर्भिरंशैरवतीर्य भगवानुपेन्द्रः शातयिष्यति दशाननश्रियमिति तस्य साहायकमीहमानो भवतः पितामहो विवस्वान् प्रथममेवापत्यवत्सलतरलः कपिकलत्रमात्मनानुप्रविश्य किष्किन्धायामाविर्बभूव । विश्वकर्म्मापि सुरथापवाहनव्यपदेशेन कोपयित्वा पाशुपतमात्रेयमृतध्वजम्, तस्य शापात् कपित्वमुपगतः कतिपयेन दिनेनावतरिष्यति घृताच्याम् । अवतीर्य वैवस्वतसन्तताववतीर्णस्य भगवतो महेन्द्रावरजस्य सागरतरणसाहायकेन दिशो दश यशसा विशदयिष्यति । कुबेरोऽपि रावणेन बलादपहृते पुष्पके तव सन्तानप्रवर्त्तनाय त्वरमाणो गुह्यकराजमञ्जनमादिदेश—

भद्र ! विद्यते तव मदयन्ती नाम कन्यका, सा च लोकोत्तरेण लावण्येन गुणेन च मानवकुमारस्य शकुनेर्द्वितीया भवितुमर्हतीति तदीशानसखस्य वचनमवनतेन शिरसा प्रसादोऽयमिति प्रतिजग्राह । प्रभवति निजपरिजनकन्यकाजनस्य यथेष्टविनियोगे राजराज इति सविनयं व्यजिज्ञपत् । गन्धमादनमागत्य मुद्गलस्य सुलोचनायाश्च प्रमदमभिवर्द्धयन् प्रभोरादेशमन्ववददञ्जनः । तत्रैवान्तरे चित्राङ्गदाव्यसनश्रवणदूना मदयन्ती नागृहीतपाणौ चित्राङ्गदायामात्मनः पाणिं ग्राहयामि, न च गृहेषु वसामीति प्रतिज्ञाय चित्राङ्गदाधिष्ठितं हाटकेश्वरसनाथं सप्तगोदावरमनुससार तव सुतः, शकुनिरपि जाबालौ दृढप्रणयी तस्मिन् गृहमेधमनास्थिते न धर्मदारान् प्रतिगृह्णीयादिति देव। देवदूतमुखादुपश्रुत्य कौण्डलेयस्य कन्दरमालिनस्तनयां वेदवतीमृतध्वजसुतस्यास्य दारानकल्पयन् । अतः सहस्व कतिपयान्यहानि यावदस्य जाबालेरुद्भवति यौवनम् । ततः परमेकपद एव द्रक्ष्यसि कृतदारपरिग्रहानिन्द्रद्युम्नसुरथशकुनिदण्डसुशर्म्मजाबालीन् । अयमेव तावदस्मदुपदेशः, यदृषीणां विशेषतो वन्यानामृत-

ध्वजप्रभृतीनां वचसि त्वया शकुनिना च स्थेयम् । अवसरेषु ज्ञास्यसि यथैतदित्यभिधाय नारदस्तिरोदधे ।

शकुनिरपि मामपवार्येदमुवाच—गच्छ त्वमानय भगवन्तमृतध्वजम्, अनुयोक्ष्यामि तावदेनमार्यस्य सुरथस्य वृत्तम्, अञ्जनदुहितुः कन्दरमालितनयायाश्च कथाम् इत्यमुना विसर्जितो द्वित्रैर्दिनैरागत्य गोमत्यास्तदेव तीर्थमवातरम्, यत्र विश्वकर्म्मादेशपरवशया काञ्चनया गोमतीमुपनीतः। तया त्रयोदशयोजनान्यपवाह्योत्क्षिप्य तटसीमनि निहितः सुदेवनन्दनः प्रियसखः सुरथः । यत्राद्यापि चक्रध्वजलाञ्छितानि प्रत्यग्रोन्मज्जनविगलज्जलधाराविन्दुकितपर्यन्तानि बाष्पविन्दुवर्षिभिर्वनपशुभिः प्रणयवशादविलुप्यमानानि जानपदपुरन्ध्रिभिः प्रदक्षिणीकृत्य कुसुमोपहारेण पूज्यन्ते सैकतेषु तस्य महाभागस्य पदचिह्नानि, तत्र सुरथपदचिह्नसनाथया पदव्या बहुदूरमुत्तरां दिशमागत्य परतः शाद्वलेषु लुप्तेयं सुदेवनन्दनस्य पदवी, न जानामि कां दिशमनुसृतो भवेदिति चिन्तयति मयि कुतोऽप्याविर्भवता महाप्रमाणेन अनतिचिरान्तरितजलावगाहनार्द्रमूर्तिना सुदूरधावनपरिश्रान्तेनेव विवृतवदनकन्दरं श्वसता कोपद्विगुणकपिलाननेन कपिना निखिलमेवावनिवलयमकम्प्यत । स वानरो विपुलोपलसारकठोरेण पाणिना फलमिव मामादायामुष्य वटविटपिनो मूर्द्धविटपाग्रमारुरोह ।

अत्र मां शाखासु जटापाशैः संयम्य परितो लताभिराबध्य क्व स ब्रह्मवर्चसमानी ऋतध्वजः, मोचयतु त्वामित्यसकृत् तर्जयामास । बहुधा सनिदर्शनाभिर्द्धर्मकथाभिरतिकरुणैराक्रन्दितैः सर्वथा निरपराधस्यात्मनोऽनुकम्पनीयतानिवेदनेन प्रबोध्यमानोऽपि नाभजत मयि करुणाम्, केवलमस्मात्तरुशिखरादवप्लुत्य रौद्रीं दिशमनुदुद्राव । पश्यामि चानेकतालतुङ्गादस्माद्विटपाग्राच्चैत्ररथपादपशाखाभङ्गेनालकानिवासिनो यक्षानाकुलयन्नेष वलीमुखहताशो हेमकूटक्रीडामणिपर्वतं कुटिलक्रूरया दृशा मुहुः पश्यतीति तस्मिन् मयि कपिनोपनीतायामस्यां विपदि पतिते यदि कुतोऽपि कारणादनुकम्पते सुगृहीतनामा भवती, तदा पश्चिमेनास्मात् कोशलविषयात् खाण्डवं नाम महाविपिनमनुप्रविश्य कान्तारवर्त्मना शतं योजनान्यतीत्य द्रक्ष्यति श्रीकण्ठतीर्थासन्नमृतध्वजाश्रमम् । तत्र मम पितरि मदीयां दशामावेद्य मोचयिष्यति मामस्माद्व्यसनादित्यभिधाय विरतवचा जाबालिस्तारतरं कलकरुणमतिचिरमारण्यकसत्त्वानामपि हृदयदारणमरोदीत् ।

तेन तस्यातिकरुणेन क्रन्दितेन नानाविधव्यसनहुताशनक्वथितस्य स्नेहमयस्य मम मनसः सलिलावसेकेनेव तप्ततैलस्य ज्वालावलिरेधाम्बभूव । न

जानामि तेन निरिन्धनं ज्वलता क्वथितजीवनेन शोकवाडवेन लवणार्णववेलेव क्षारपिण्ड एव कथन्नाभवम् । प्रियसखि ! तथा न तव नात्मनो न वेदवत्या न तातस्य तथाविधेन व्यसनेन भृशमदूयत मम मनः, यथा मानवकुमारप्रियसखस्य जाबालेर्बालस्य हृदयमर्मभिदा रुदितेन। ततो विपदि धीरमात्मानमनेकविधैर्विवेकैरवष्टभ्य दिष्टचा वर्षान्तरव्यवहितेन तेन वानरेण निश्शङ्कसंचारेयमवनिः, दिष्टचा दृष्ट ऋतध्वजाश्रमाभिगामी पन्थाः, येन गत्वा संभावयिष्यामि वेदवतीम्, दिष्टचा द्रष्टास्मि पुरोधसो मुद्गलस्य गुरुमृतध्वजमात्रेयम्, यदि ग्रमुनानिवेदितप्रवासो दैवादसौ निजमाश्रममागतो भवेदिति हर्षसंभिन्नेव मन्युना वालं जाबालिमाश्वास्य पश्चिमां दिशमभिप्रास्थासिषि । कतिपयेन कालेन खाण्डवं नाम महाविपिनमासाद्य मनसा व्यचिन्तयम्—

अहो ! खाण्डवीनगरस्यादेशभूतमिदमरण्यमद्यापि स्थानिवद्भावेन पुरमिवोपलभ्यते, यत्र राजावरोधनस्येव विषमस्याटवीगर्भस्य विततवेत्रवल्लिवेल्लनविनिवारितपरप्रवेशानि कक्षान्तराणि कञ्चुकिन एव प्रविशन्ति, भोगिनीभोगलम्पटोऽवनीभुजङ्ग एवान्तर्रधिवसति, परिवारयन्ति पर्यन्ताजिरममी दानद्रवदुर्दिनबलाहका दन्तावलाः, तरलसटापाशाश्च हरयः,सन्निधौ नित्यमनुवर्तमाना बलावनमितबाणासनमण्डलनिस्सारितमुखरशिलीमुखाः, परस्परसंघट्टरणत्कठिनचर्मभीषणखड्गपरिचयनिर्भया जनयन्ति जननयनकौतुकं परिप्लुतगतिरामणीयकेन वनवानराः, यत्र च विपणिमार्गा इव क्वचिद्विकीर्णहरिदारितकरिकुम्भमुक्तमौक्तिकप्रकराः, क्वचन कर्पूरपरागवासिताः, क्वापि मृगमदपङ्कसुरभयः, कुत्रचिदाततचमरवालव्यजनाः, कुत्रापि धातुसारधारिणो दृश्यन्ते श्वापदपथा इति चिन्तयन्ती तस्य न्यञ्चदेलावल्लिदोलाखेलदबालकिन्नरमिथुनगीतानुपातिपारावतकण्ठकूजिततालस्य, दशनदंशविनोदवञ्चिताधरैर्नागदम्पतिसुरतैः सनाथकुञ्जोदरस्य नित्यनिर्निद्रसर्वाङ्गीणलोचने विवसनजघनसीमलवणिमानं निभालयति पुरन्दरे, निधुवनावसानलज्जमानया पुलोमनन्दनया करकिसलययुगलव्यापारणेन कतिपयपतिनयनमुद्रणामौग्ध्यमुपहसद्भिरिव कुसुमधवलाननैरतिमुक्तलतामण्डपैरशून्यस्य, सहस्रेणापि रविकरमार्जनीभिरनुत्सारितलतागुल्मगर्भतिमिरस्य, नाकनाथनयनैरविभावितलावण्यविधेः, अनन्तमुखैरनवसितरामणीयकस्तोत्रगाथाप्रबन्धस्य, कमलदलैरप्राप्तपल्लवपेलविम्नः, माहिष्मतीपतिबाहुभिरपरिमितमहीरुहप्रकाण्डपरिणाहस्य,चन्द्ररथयुग्महंसैः प्रतिबिम्बसंक्रान्तिमिषेण सेवितपल्वलस्य, ग्रावपिण्डिकावर्गपक्षच्छेदटङ्कैरशनेररै (ग्रै) रभेद्यजरठतरुत्वचः, वारणस्येव दानवारिणा सततसन्निधापितसुरभिभावस्य, नक्षत्रपतेरिव निरुपादान-

क्षयशिल्पिना मयेन नित्यमधिष्ठितस्य, अध्वरवाटस्येव वास्तुकुशलतक्षकरचितोचितदारुमण्डपस्य, कात्यायनीसंपरायस्येव महिषविषाणक्षिप्तपाषाणखण्डकुपितकेसरिचपेटपातपोथितानेकसत्त्वस्य, दिवसावसानगगनस्येव प्रकटलक्ष्यमाणच्छायासरणिविश्राम्यदृक्षमण्डलस्य, नृपतिभवनस्येव निशान्तेऽपि श्लक्ष्णलघुधवलकञ्चुकैर्भोगिनीविनयनप्रवीणैः कञ्चुकिभिर्भीषणतया नराणां प्रवेशमसहमानस्य, पम्पासरस इव वियोगिरामोपतापिलक्ष्मणाह्लियमाणसारसस्य, मन्दरोन्मथितक्षीरोदतीरस्येव विधुरुपीडितकमलाकरस्य, महानगवेष्टनायासनिःश्वसन्नागमल्लस्य, सुमनस्समाजनिलीनसिंहिकातनयान्वेषणव्यग्रहरेः, सलिलोन्मग्नमत्तदन्तावलचतुर्दन्तिकावलोकनकुतूहलाकृष्टकौशिकस्य च महतः खाण्डववनस्य मध्यमासादयम् ।

तत्र कठोरपृथुलायतोज्ज्वलेन मूलेन निश्शेषमवनिपुटं विभिद्य महावराहदशनमुसलग्रथनव्यथाम्, आदिपोत्रिपादाक्रमणन्यञ्चदमरगिरिमूलसूचिव्यधव्याधिं च स्मारयन्तमर्णवनेमेस्त्रिविक्रमोरुदण्डद्वयसेन घोरदुरगश्वासमारुतपरिपूरितकोटरेण गन्धगजकटतटकषणलग्नदानोदसुरभिकठिनत्वचा प्रकाण्डेन पूरितविततधरणिपरिणाहम्, उच्छूनस्कन्धदेशोद्गताभिरायामिनीभिः शाखाभिराशा इव केशग्राहमाकृष्य वशे स्था(प)यन्तम्, उद्गतताम्रतुण्डैरिव शुकशिशुभिरग्रभागप्ररूढकिसलयैर्जरठदलस्तबकैरशून्यविटपशिखरमम्बरवेणु - मूर्द्धानमारुह्य नृत्यन्तीभिरूर्ध्वमुखजनसमाजप्रेक्षणीयचङ्क्रमाभिरग्रशिखाशैलूषीभिरासन्नरविरुचिनिचयरागसंविभागैरिव लोहितायमानमतिप्रमाणं विल्वविटपिनमधोधोऽवर्तमानेनापि श्रीफलपरिग्रहपरिहारादपेतविकटकण्टकत्वादकठोरवल्कलावरणादनिह्नुताज्जटापटलादिध्मभारवहनकठिनमांसलाभ्यामुभाभ्यां स्कन्धाभ्यामपगतरागविकाराच्च सर्वस्मादवयवादस्तब्धमधुराच्च तुङ्गभावात्तस्य श्रीतरोरथवा सर्वजगतामुपरि तिष्ठता भगवता गालवेनोपास्यमानमपौरुषेयप्रतिष्ठमीशानस्य स्फटिकमयं लिङ्गमपश्यम् । दृष्ट्वा तौ पशुपतिपाशुपतौ प्रणम्य नातिदूरतो बद्धाञ्जलिरतिष्ठम् ।

तथा तिष्ठन्त्यां मयि भगवान् गालवो विघटितसमाधिमुद्रोन्मिषितलोचनेन निशावसानोन्मीलितनलिनेनेव सरसा चिरप्रत्यागतश्वासवेपितं नासिकाग्रमपहाय परितः प्रसृतचक्षुषा वातधुततिलप्रसूनोत्पतितभृङ्गेणेव केदारेणोपसंहृतास्यसंवरणस्फुरिताधरेण, कुमुदकदम्बमुद्राविच्छेदोच्छ्वसितसंध्यारागेणेव रजनिमुखेन मुखेन सकरुणमिदमवादीत्—

भद्रे ! काऽसि ? कथमिमामरण्यानीमनुप्रविष्टाऽसि ? व्यञ्जयन्ति तव विषादममी मृदितमृणालपेलवा विपर्यस्तप्रसाधनविलुलिता दीर्घाध्वश्रममलिनाः क्लान्तवदनपुण्डरीकाः प्रतीकाः । कथय विपन्नकन्यकाजनाभ्युपपत्तिधनः पातालकेतुना रसातलविवरं प्रवेशितां विश्वावसुनन्दनां मदालसां महतो व्यसनादुद्धृत्य स्वस्थीकृतगन्धर्वकुलो मुनिर्गालवोऽस्मि । प्रतिकरिष्यामि ते विपदमिति वादिनो मुनेः पादयोः प्रणिपत्य भगवन्महामुने ! कालिन्दीमुखादधिगतत्वदनुभावाऽस्मि । जानासि मृतप्रत्युज्जीवनीं विद्याम् । त्वयि किमकथनीयं नामेत्युपोद्घातेन सर्वमात्मनो वेदवत्या जाबालेश्च व्यसनं न्यवेदयम् । विदितवेदनीयो मुनिरसौ मदनुमार्गेणागच्छ, गच्छामि मुनेरात्रेयस्याश्रयम्, जीवयिष्यामि वेदवतीम्, प्रापयिष्यामि चित्राङ्गदासमागमोद्देशमायुष्मतीमिति भृशमाश्वास्य मामृतध्वजाश्रमं निनाय ।

तत्र जीर्णपर्णोटजद्वारि शोकावेशवशादिवानवरतपतितपाककपिलफलकुलकैतवेन रुदितताम्रनयनरोचिरनुविद्धबाष्पबिन्दुवर्षिणो निःस्पन्दशकुनिलोकसंकुलस्य कक्कोलपादपस्य मूले मोहमुपगत्य निलीनामस्मच्चरणपातमर्मराराविणां जीर्णपर्णोच्चयानां ध्वनिमाकर्ण्य तमेव कन्यकाजनकदर्थनव्यसनिनं शाखामृगमागतं वितर्क्य साध्वसादपसरद्भिरथावामालोक्याभ्युद्गमेन हर्षमभिनयद्भिरात्रेयेण भगवता नीवारपाकसंभागेन जाबालिनिर्विशेषमभिवर्द्धितैरुपरतान्यव्यापारैरश्रुलवलुलितलोचनैराबद्धमण्डलैररण्यपशुभिरभिवृतामासन्नह्रदप्ररूढनलिनीपर्णपुटाहृतस्य कालिन्दीसलिलस्य शीकरैः शुकातिभुक्तोद्वान्तैरिव जम्बुभिरविरतमभिषिञ्चता मृणाललतासूत्रसन्ततिस्यूतविततया कुमुदकिसलयवलयजलार्द्रया प्रत्यग्रोन्मज्जनजलकलिलकलहंसपक्षपरम्परयेव वीजयता पवनधुतकपिकरजकण्टकस्फुटितसिचयसंवरणव्यापृतेन धरणितललोठमानचिकुरसंयमनव्याकुलेन, वलीमुखनखमुखव्यधक्षतानि मकरन्दसन्नयनसान्द्रैः कुसुमरेणुभिरनेकविधाभिर्व्रणप्ररोहिणीभिरोषधिभिश्च पूरयता, प्लवगकराकर्षभग्नमङ्गलवलये मृणालमृदुले बाहुलते यथासन्निवेशमुरसि स्थापयता, महामुनेरात्रेयस्य चिरपरिचयादुपात्तया मैत्र्या विपन्नानि भूतानि बन्धुवदनुकम्पमानेन, जातिविरुद्धधीरभावेन, मुनिजनातिशायिविज्ञानप्रकर्षेणातिथिसत्कारकुशलेन, प्रवासिनि मुनावग्निप्रत्युद्गमनविधिविज्ञेन, जराविलम्बिवलिपिहितलोचनेनाश्रमपालनाम्ना वानरेण सायं प्रातर्वितानानलसमिन्धनावसाने त्वरितपदमागच्छता, दिवानिशमपरित्यजता प्रतिपालितकलेवरां विततबर्हैर्बर्हिणविनिवारितातपाम्, विषाणाङ्कुरदलितकदलीप्रकाण्डोद्गतस्य कर्पूरनिर्यासद्रवस्य

पुष्कराग्रपीताम्, धारामभिवर्षता कलभकेन शरद्घनान्तरिततडिदुपमानमुपनीताम्, सरस्वतीमिव स्फुटमपरिलक्ष्यजीवनाम्, गङ्गामिवोग्रेण विषादेन चिरमूढाम्, दाशरथिशरशिक्षामिव धरणितलनिर्लोठितालकाननाम्, सीतामिवाक्षबलहारिणा कपिना शोकगहने निषण्णां दृष्ट्वा परित्यक्तामपि स्वजनचिरहवेदनया प्रबलया मूर्च्छिताम्, कुमारसमरभग्नासुरसेनामिव परिवृत्ततारकाम्, कूर्मराजतनुमिव धरणिप्रतिष्ठारजोधूसरपृष्ठाम्, नैगमेयमूर्त्तिमिवापरित्यक्तकौमारामपि वनवीथिमिव वयस्संबाधेन तरुणाक्षिप्रमदवर्द्धिनीम्, स्वजनेनेव चेतनयापि विरहिताम्, मृगैरिव प्रलयेनापि परिगताम्, आश्रमेणेव शून्येन हृदयेन दुष्प्रतिक्रियविपदं वेदवतीमपश्याव ।

तस्य दैवदुर्व्यसनवृषविकर्त्तनतापशोषितप्राणसलिलस्य पिण्डीभवद्धूसरलावण्यपङ्कशेषस्य वेदवतीवपुःपल्वलस्य प्रदरामिव कपिकरजव्रणान्, आयतशैवालवल्लिमिव धूलिधूसरनीरसां धरणितलविप्रकीर्णलोठमानां वेणिम्, अरविन्दमिव वलितकन्धरानालम्, अधोविलम्बिम्लानकपोलकिसलयम्, आविर्भवत्कठोरहनुकरहाटम्, अपरागपर्यस्तदशनरुचिकेसरकरालमाननम्, मीनमिथुनमिव निःस्पन्दापवर्तितं लोचनयुगलम्, अपमृदितव्यस्तावस्थितं मृणालमिव बाहुम्, अतिकरुणकूणितेन नयनेनावलोक्य जातकरुणो भगवान् गालववलाहको जीवनमभिववर्ष ।

तथा मृतप्रत्युज्जीवनविद्याभिमन्त्रितया गालवकमण्डलूदकधारया चन्द्रिकयेवोदमील्यत वेदवत्या नयनेन्दीवरम्, प्रदोषवेलयेव प्रकृतिसिद्धा-(द्ध)मतिमसृणमुग्धचटुलं ज्योतिरनीयत तारका, पूर्णिमयेवाह्नियत वैकल्यमाननचन्द्रस्य, मार्जन्येवापमार्जितं सर्वाङ्गीणधूसरतारजः, क्षालितानि कपिकरजक्षतानि, धौताः प्लवगबाहुपीडनज्यानिपङ्काः, चिरप्रवासप्रतिनिवृत्तचेतनासमुदाचारोचितमुदगम्यन्त श्वासाः, इत्येवमवसितमूर्च्छामोहयाऽनया वेदवत्या ससंभ्रममुत्थायालिङ्गिता, प्रत्यालिङ्ग्य तस्यैव कक्कोलतरोरधोभूमावुपाविशम् । उपविश्य पूर्वमेव नदीमुखादधिगतसकलवेदवतीव्यसनवृत्तान्ता निजामापदमावेद्य द्विगुणदूनामेनामकरवम् । भगवान् गालवोऽपि तेनाश्रमपालेन वानरेणोपनीतामतिथिसपर्यां प्रतिगृह्य मुहूर्त्तमासाम्बभूव । ततः प्रत्यासीदति पुष्करयात्रासमयः, युवामपि मया सह तमेव देशमागच्छतमित्यादिदेश ।

प्रतिगृहीततदादेशा पुष्करं प्रति प्रतिष्ठमानाऽहमग्निशरणद्वारशिलायां नखमुखलेखनीगृहीतैर्धातुरसैरौपच्छन्दसिकेन छन्दसा जाबालिवृत्तसूचकमर्द्धसमं वृत्तमलिखम्—

वटविटपिनि वानरेण बद्धं सुतमपि तात ! न वेत्सि कोशलेषु ।
त्वयि निगमनिधौ निजामवस्थां कथयतु किं तनया सुलोचनायाः ।। इति ।

ततस्त्रयो वयमिदं पुष्करं नाम सरः समनुप्राप्ताः । तत्र चाद्य प्रातरेव पयसि मग्नो मुनिर्गालवो नाधुनाप्युन्मज्जति, न जानीमः कां गतिमनुप्रपण्ण (न्न) इति । अत्रैवान्तरे दृष्टे युवामावाभ्यामित्यभिधाय जोषमासीनायां मदयन्त्यां तातस्य विश्वकर्मणः कापेयदुश्चरितैर्व्रीडिता च व्यथिता च भगवतो मुनेरात्रेयस्य निदेशमनुसंधाय तिस्रोऽपि ताः कन्यका हाटकेश्वरनिकटं निनाय । तत्र ताभिः सममेव समयमन्वपालयच्चित्राङ्गदा ।।

इति श्रीगोकुलनाथसूक्तौ कथायां वेदवतीचरितगर्भं मदयन्तीचरितं नाम चतुर्थमाख्यानकम् ।।

---

## पञ्चममाख्यानकम्

आत्रेयः पाशुपताचार्यो भगवानृतध्वजश्चित्राङ्गदामुखादुपश्रुत्य सौदेवस्य राज्ञः सुरथस्य तादृशं वैशसमतिदुर्मनायमानो विदर्भामुपजगाम। ततः परिणतिसुरसमेनमुदन्तमनुशास्य प्रकृतीः प्रजाश्च स्वस्वव्यवहारेष्वस्खलितवृत्तीराश्वासयामास। ततो निजाश्रममभिप्रतिष्ठमानो यावदापपात पयोष्णीतटं तावदुपकण्ठे पुष्करनामायतनस्य सुधालेपधवलकुट्टिमायां चत्वरवेदौ द्वित्रगन्धर्वकुमारीपरिवारामायतश्वासविच्छिन्नाश्रुधारावर्षणकादम्बिनीं चित्राङ्गदतनयां चित्राङ्गदासहचरीं मन्दोदरीमपश्यत्। एनां तु विनयनम्रामवस्थितामनामयानुयोगेन वर्द्धयन्नुदन्तमपृच्छत्। सा तु मन्दारिकावियोगावधि निजं वृत्तमावेदयामास—

भगवन्नात्रेय! तपोनिधे! नूनं जानात्येव भवानकरुणेन निष्कारणकोपनेन क्रूरकर्म्मणा तातेन विश्वकर्म्मणा पातयित्वा शापदण्डमपवाहिते सख्यौ सुरथे काममपि गतिमनुप्रपन्नायां चित्राङ्गदायामस्याः पदवीमनुसर्तुमभिपेदे मन्दारिका हिमवदु(प)त्यकाटवीम्, अहं तु पञ्चालान् प्रविश्य तदुत्तरपूर्वेण वर्त्मना कतिपयैरहोभिरासादयं विदेहान्। आसाद्य ब्रह्मविद्याविदामजिह्मप्रकृतीनामवनिभुजां जनकानां जनपदम्, अतिमहतः, मुदिरमेदुरद्युतेः, अनवरतपतितधवलकुसुममुकुलमौक्तिकप्रकरसंकुलशुक्तिसंपुटनिरन्तरतलतया लवणोदवेलातमालवनवीथिमनुहरतः, जनहृदयहारिणः, हरिणगर्भिणीशयनलीलासनाथकच्छोलपप्रतानस्रस्तरस्य, कपिकुलोत्पतनकुपितवनवराहखन्यमानमुस्तास्तम्बसुरभिणः, वैखानसहोमधूमपिण्डैर्ज्जरत्पारावतैरिव नित्यमनुबद्धनीडगर्भस्य, द्विजसधर्म्मिणीकरकिसलयार्पितनिष्पावबलिपिण्डयावनतरुमूलस्य, बहु(टु)विलूनपवित्रद्विदलविवृतगर्भैरिध्मभारसंयमनरज्जवे समुत्खातशेषैर्वनमहिषविषाणकोटिपाटनजर्ज्जरीकृतधरणिविप्रकीर्णजरठदलैरारण्यकलूनावशिष्टनीवारमञ्जरीसंभरणनिर्भरगर्भाभिर्वनमूषकविवरावलिभिर्विरलमूलैर्नकुलत्रासनिलीनकालाहिलोचनाङ्गारकणकर्बुरतया भयभ्रष्टशबरकुटुम्बिनीहारगुञ्जापुञ्जसंकुलैरिव शम्बूककीकसविषमैरनेकशो दवानलदग्धप्ररूढैरसकृदतिविक्रान्तकेसरिकरचपेटपातमूर्च्छितगजगण्डोपलपतनचूर्णितोत्थितैर्मुहुरनुभूतकुम्भीनसभोगवेष्टनबन्धैः कुशस्तम्बैः संबाधपरिसरस्य, ब्रह्मचारिभज्यमानशुष्केध्मलघुशाखामण्डलस्य वानीरद्रुमषण्डस्य मध्ये नातिदूरे मद्गुरवधूशूकव्यधव्यथितोद्ग्रीवकमठनिःश्वा-

सोच्छलितजलधारासहस्रात्, जरठपाठीनमीनग्रस्यमानग्राहपोतध्वनितवेल्लितसलिलात्, उपतीरविवरलीनपीवरकुलीरचरणसन्दंशक्रकचदारितगोनर्दलाङ्गूलदामशोणितोक्षणशोणपर्य्यन्ततया विद्रुमचुम्बिताग्रादिव लवणार्णवकल्लोलात्, अलगर्दैर्निर्विशेषशैव(ल)लतासंकुलपुरुषदघ्नजम्बालात्, अभ्यर्णशालूकखननविवरप्रविष्टडुण्डुभानुद्रुतदर्दुरात्, पङ्कप्रोतप्रोष्ठीसमुद्धरणाभिलाषनिमग्नसहस्रदंष्ट्रवक्रकन्दराप्रविष्टकङ्ककुलात्, जलव्यालजग्धविषसपलशकलग्रासतृप्तबकलोककलकलसंकुलात्, उभयतटावसक्तविकटदीर्घदारुसंघट्टघर्घरघोषघोरसंतरणसेतोः, क्षीरोदकीस्रोतसः, पुरन्दरवपुर्व्रणसहस्रनिर्माणसहस्रारस्याङ्गिरसशापवज्रस्य निशितीकरणोपलपिण्डिकया, शतानन्दपुरोगमैप(बं)टुभिरहर्दिवं प्रदक्षिणीकृत्य वन्दितया, क्लेशकर्मविपाकचेतनानामपगमादपवर्गावस्थयेव मूर्त्तिमत्या, भगवतान्वीक्षिकीसूत्रकारेण प्रत्यक्षमुपदर्श्यमानया, सुतनिर्विशेषमभिवर्द्धितैरस्रुविन्दुकितनयनैरुद्ग्रीवैर्हरिणकिशोरकैराघ्रायमाणकरनखमयूखया, शोकावेगवेगकरुणहंभारवाभिरनुवचनश्रवणतृष्णाप्रसृप्तचापल्यतरलमृदुलबालधिदामभिरनुदिनमरण्योपान्तादागत्य गोग्रासपिण्डाभिलाषचपलरसनाभिर्मुनिहोमधेनुभिरवलिह्यमानप्रकोष्ठया, प्रतिदिवसमष्टधा विभक्तस्याह्नः पञ्चम भागे नीवारबलिभागमभिलषद्भिः कापेयचपलैः कपिशिशुभिराकृष्यमाणचीरचण्डातकया, प्रत्यहस्तृतीयभागमुभयकरगृहीतमृद्गोमयपिण्डेन जरता वानरेण मुहुरग्रे धावित्वा प्रतिनिवर्तमानेन सशोककोपं स्नानार्थमाकृष्टया, प्रतिप्रत्यूषमाश्रमशुकैर्नामग्राहमाहूतया, प्रतिसायमायतश्वासेन शून्या दिशो दश पश्यता दैवमात्मानं च निन्दता गोतमेनावलोकितया, पतिशापवशेन पाषाणभूतया, महामुनेरक्षपादस्य धर्मदारैरहल्यया परिपूतशरणद्वारम्, अखिलमङ्गविद्याविशुद्धं सरहस्यमाम्नायमभ्यस्यद्भिरावद्धमौञ्जमेखलैरैणेयत्वगुत्तरासङ्गसंवीतैराषाढिभिरनपेतकौमारैरपि विज्ञानवृद्धैर्वंशप्रसूनैर्बटुभिरेकतः प्रस्तूयमानशास्त्रप्रयोजनाभिधेयसंबन्धम्, अन्यतो विमृष्यमाणप्रमाणविभागम्, अपरतो विभज्यमानापवर्गिकप्रमेयवर्गम्, इतरतो निर्णीयमानसावयवन्यायम्, इतो विविच्यमानन्यायपूर्वोत्तराङ्गम्, अमुतो विक्रियमाणकथापूर्वोत्तररूपान्तरतम्यम्, अतो व्याक्रियमाणप्रकृत्यधिष्ठातृपुरुषोत्तमत्रैगुण्यशक्तिम्, आतिथेयपरमैः, सधर्म्मिणीसहचरैर्मुनिभिरारब्धवी(नी)वारकणमुष्टिपाकम्, अलवणक्वथ्यमानहिलमोचिकाशाकमाश्रममपश्यम्।

तस्य चैवंविधस्य पुण्याश्रमस्य मध्ये त्रयीमिव विद्याभिः, त्रेतामिव सप्ततन्तुक्रियाभिः, त्रिविक्रमपदक्रमानिव ज्योतिर्मण्डलैः, त्रिपथगाप्रवाहानिव लोकैः, त्रितारवर्णानिव मन्त्रैः, त्रैवेद्यमिव मरुद्भिः, ग्रामत्रयमिव स्वरैः, वेद्यत्रै(गुण्य)-

मिव प्रपञ्चैः, त्रिवर्गमिव पुरुषकारैः, त्रिभुवनमिव ग्रहगमनमार्गैः, पुरुषोत्तमशक्तित्रितयमिवानुभावैः, त्रिनयनलोचनानीव कारुण्यरसैः, निवातनिष्यन्दैरिव जलधिकीलालकल्लोलैर्मुनिभिरुपास्यमानानध्यात्मचिन्तास्तिमितनयनान् त्री (न्) पुरुषानद्राक्षम् । तेषामेकतमेनान्यतमयोर्मध्यमनद्वा (ड्वा) हमर्घ्यानु ( प ) पदं मधुपर्कं चोपह्रियमाणमालोक्य काविमावतिथी कोऽयमातिथेयपरमः पुमानिति कमपि तापसकुमारमपृच्छम् ।

असौ तु परस्परविभक्ता न तु जटाभावमापन्नाः, घननीला न तु तडित्कडाराः, विचित्रा अमी कचा इति मम चिकुरेषु, कोऽप्येष कुत्रापि न मेरुतरुः, यस्य न शिलाखण्डकर्कशैः, न निसर्गविषमैः, न मलिनच्छायैः, अतिधवलस्निग्ध्व (ग्ध) निस्तलैः फलैरुपरचितेयमक्षमालेति मौक्तिकप्रतिसरे, नूनमिध्मभारमाचार्याय वक्षसैव न तु स्कन्धेन वहत्ययं बटुजनः, येनास्माकमंस इवोर एवास्य गन्धगजगण्डमण्डलोच्छूनमाभातीति स्तनयोः, अपूर्वः स कोऽपि प्रभातप्रभाकरकरनिकरानुकारी मुञ्जास्तम्बो यस्य त्वक्तन्तुसंतानमेखलादामसंदानितमवलग्नमीदृशं कृशिमानमभ्युपैतीति चामीकरसूत्रावनद्धे मध्ये, जानामि न्यायतृतीयाध्यायचक्षुरद्वैतप्रकरणकोविदोऽयम् अन्यथा कथमायते दृशौ श्रुतिमप्युल्लङ्घ्य प्रवर्त्तयन् प्रान्तभागेनैकतां नयतीति नयनयोः, कापि धन्येयमवनिर्यस्यामेवंविधभुजगनिर्मोकपरिलघुधवलवल्कलास्तरव इति दुकूले, किमप्यपूर्वमस्य विद्याव्रतं नायमैणेयं चर्म वपुषा यावदेणीलोचनस्रजमेव सुखेन वहतीति कटाक्षेषु, चित्रीयास्तिमितलोचनो निजगाद—

योऽयमुत्तप्तचामीकरकपिलेन श्यामलजरातिलकबिन्दुशबलेन पलितधवलरोमसूचिसंकुलेन कालिन्दीसलिलबिन्दुभागीरथीतरङ्गसंभेदपावनेनेव सरस्वतीस्रोतसा क्रोडाधिरोपितशनिप्रतिबिम्बसहस्रलाञ्छितसर्वावयवेन बहलबहुलपक्षनिगीर्णशशधरकलाशतोद्गारिणा च प्रभातमार्त्तण्डमण्डलेनेव, चरणाङ्गुष्ठनखमुखादशेषभुवनपावनीममृतार्णवकल्लोलधवलामपरामिव गङ्गां तृतीयदृशं प्रसूय न केवलं ललाटोद्गतत्रिषमलोचनमुत्तमाङ्गनिहितगङ्गमीशानमेव, यावत् त्रिविक्रममप्युपहसता जगदनुग्राहिणा विग्रहेण सत्करोति श्रोत्रियावतिथी । स एष भगवानस्माकमुपाध्यायो ब्रह्मविदां पतिराङ्गिरसो गोतमः । यश्चायमिन्दीवरकिसलयसोदरद्युतिरवतंसवज्रोपलकिरणच्छटाभिरिव, निगमसारगङ्गाप्रवाहपूरितश्रवणकूपपरिवाहिकाभिरिव, साम्राज्याभिषेकपट्टबन्धधवलोष्णीषपटसूत्रप्रालम्बैरिव, क्षीरधवलकटाक्षनिष्ठ्यूतकारुण्यामृतबिन्दुभिरिव, वदनचन्द्रचन्द्रिकाङ्कुरशलाकाभिरिव, पलित-

धवलाभिरलकलताभिरुज्ज्वलितकर्णोपकण्ठो मेध्येनानडुहा सह मधुपकमुद्गत्य प्रतीच्छति स तत्रभवान् विदेहानां शासिता राजर्षिः सीरध्वजो नाम। यः पुनरमुष्य वामावकाशमध्यासीनो मुनेः प्रतिगृह्णात्यातिथेयम्, असौ भगवतो विकर्त्तनादधिगतसरहस्ययजुर्विद्यो माध्यन्दिनगुरुः पुराणयोगी याज्ञवल्क्यः, यस्य समयमुपजीवन्ति वाजसनेयिन इति बटुमुखादधिगत्य तेषां नामानि, नूनममी प्रतिकरिष्यन्ति नो विपदम्, आवेदयिष्यन्ति चित्राङ्गदाया गतिमिति मनसि बद्ध्वा दृढामाशामृषीणामभिमुखमागत्य तारमरुदम्, येन सकल एव मुनिसमाजो जगदेकपावनानि नयनानि मयि युगपदेव पातयामास। भगवान् गोतमस्तु सुचित्तेनायतस्तिमितया दृशा निरूप्य मामन्यतममन्तेवासिनामाहूय प्रवेश्यतामियमत्र समाज इति निदिदेश।

स च बटुर्गुरुनिदेशसमनन्तरमेव त्वरितपदमनुसृत्य मङ्गलमुखि! मदनुमार्गेण प्रविश मुनिसमाजम्, आदिशति भगवानाङ्गिरसोऽस्माकं जगतामेव वा गुरुरक्षपाद इत्यभिधाय करेण मम करमाचकर्ष। तेन च मदनरूपसम्पद्वेणिदण्डमिव पैप्पलं दण्डमाकृष्य करेण विस्फुरता कपिलजटाकलापवलयिताननमण्डलेन बालातपचक्रवालाश्लेषविकचपुण्डरीकेणेव लावण्यस्रोतसा, होमानलभसितत्रिपुण्ड्रनिह्नुतललाटोर्णपङ्क्तिना शरद्घनच्छेदच्छन्त(न्न)च्छायावर्त्मनेव गगनेन, मदनधनुर्गुणटङ्कारस्तनितघनसमयस्य यौवनस्यारम्भे समुद्भिन्नश्मश्रुकचाङ्कुरनिचयचारुचिबुकतया प्ररोहन्मणिशलाकाश्यामलसानुसीमानं विदूरगिरिमुपहसता, विश्वम्भराभारवहनपर्याणिकयेव रुरुत्वचा सन्नद्धस्कन्धककुदेन, सौभाग्यलक्ष्मीवरणमधूकमालयेव शाणोपवीतदामलेखया लाञ्छितांसदेशेन, अन्धकारिललाटलोचनकूपीटयोनिक्वथनधूमधूसरसुरधुनीस्रोतःपातशोभनप्रपातेनेव कुलपर्वतेन, मूर्वामयमेखलादामदृढपरिकरद्विगुणकृशीयसो मध्यभागस्य भङ्गभयादिव नवच(प)योनिधीयमानरोमराजिविष्कम्भदण्डनिखननविवरायमाणनाभिकूपेन, प्रतिदिनक्षालनकपिलवल्कलसंवीतोरुणा सन्ध्याभ्रगर्भिताधरार्द्धेनेवोदयगिरिणा, प्रमथनाथकोपपावकप्रवेशावधि निर्विघ्नं परिहाय रतिं ब्रह्मच(र्य)रते(न) मकरध्वजेन पशुगर्भवासवृजिनापकर्षणव्रतप्रयतेनेव नासत्ययोरन्यतरेण, परमतीर्थिकेनापि श्रुतिपथोल्लङ्घनप्रवृत्तचक्षुषा, जलदकालेनापि हंसवंशवर्द्धनस्यातिवल्लभेन, वसन्तसख्योचितरूपसंपदापि जातिमता, क्षत्रनाथसुतेनापि नक्षत्रनाथमनोरमेण, कुलजेनापि नकुलमनुकुर्वता, धनञ्जयपरिचरणव्रतवर्त्तिनापि धनञ्जयावर्त्तिभुजबलेन, भीषणेतरप्रकृतिनापि रणभीमेन, मम पद्मिन्याः पाणितामरसमाकर्षता

राजकुञ्जरकुलकलभेन मधुसहचरशिलीमुखसमुत्पतनध्वनिपरिपूरितमकारि दिक्चक्रवालम्, आमूलवलितं व्यधूयत कठिनकण्टकसूचिसूचितान्तर्गतबहुगुणं बाहुनालम्, अकाण्डप्रसर्पदुत्कलिकासहस्रचकितकरणचक्रचपलिमचलितमुल्लङ्घितसीम समुत्पतितपतितस्तिमितपरिवर्त्तितोद्वेल्लितं व्यक्रियत नयनमीनमिथुनम् ।

अथ तस्य संकुचिताशाविस्तारणमित्रस्य तामरसहासकेन ताम्रेण करेण स्पृश्यमानाया मम मार्त्तण्डमणिशिलाया इव क्व निलीय पूर्वमतिष्ठत् ? कथं तदानीमेव कुतश्चिदाविर्भूय निरिन्धनं जज्वाल प्रथमभावपावकः ? येन न भस्मसादभवम्, न च विकारधूमायितमत्यजम् । अमुष्य लोकलोचनामृतशलाकाविकिरणशीतकिरणस्य लावण्यसुधासारवर्षिणीभिर्दीधितिभिरनीयत द्रवतां मम स्वान्तचन्द्रकान्तः, येन पिच्छिलायामङ्गभूमौ प्रतिपदमस्खलदभिजातिशालीनता न मित्रव्यसनक्षमयमगणयत्, अकाण्ड एवाहृष्यत रोमतन्तुकैरविणी, तस्य भुजभुजगराजेन करे गृहीत्वा संक्रामितमदनमदविषण्णाया मम तस्मिन्नेव काले कमप्यपरिचितपूर्वमखिलकरणवर्गप्रसरनिग्राहिणं विकारमभजतान्तर्वृत्तिः, येन सुहृज्जनव्यसनविरसस्यापि संसारविषयस्य न तिक्ततामज्ञासिषम्, अपि तु मधुरतामन्वभूवम् । आश्रमलतालास्यगुरुभिर्दक्षिणमारुतैरिवोपनीतानि, मुनिकुमारीपा(पां)शुक्रीडितस्थलीभिरिव संविभक्तानि, तपोमार्जनीभिस्तापसहृदयकुट्टिमादिव समुत्सारितानि, भ्रमरकुलपतनकम्पितकेतकीकुसुमादिवोद्भूतानि, मम मनोभूमेः कामानुचारिभिरि(व) वर्गैरज्ञा(ज्ञा)तपूर्वमुपप्लवोत्पातमावेदयन्तीभिरकाण्डकलुषाभिराशाभिरिवाभिवृष्टानि, नयनयोरन्धङ्करणानि, रागरजांसि कुतोऽप्येकपद एवाविर्भूय मामुद्वेल्लदुत्कलिकासहस्रचपलामकस्मादेव वर्द्धमानेन रसेन लङ्घितसीमानमुन्मथितसेतुभिर्भ्रमिभिरुद्भ्रान्तसत्त्वविकृतगतिमाषाढमासतटिनीमिवाविलयाम्बभूवुः ।

अत्र न जानामि किं कुवलयदलनीलस्य कुतोऽप्याविर्भूय दिशां मुखानि स्थगयतो मदनबलाहकस्य शरवर्षधारा ममोपरि न्यपतन्, उत नियतिपरिपाकरोधसा परिपतता विकलीकृता तारल्यमभजम्, येनात्मानमवष्टब्धुं न प्राभवम् । अस्मिन्नेवान्तरे चित्राङ्गदाचरित्रमनुस्मृत्य मनसि व्यमृशम्—अहो ! महान् मम व्यतिक्रमः, यदेवंविधायामाकस्मिकप्रथमभावोदयविपदि दैवेन मन्मथेन वा पातितां प्रियसहचरीं चित्राङ्गदामनुरागोचितमात्मनः प्रदानमध्यवस्यन्तीमनभिजातरूक्षैरुपालम्भाक्षरैरखेदयम् । इदानीमेवमाकुलीक्रियमाणमात्मानमपि न प्रभवामि व्यवस्थापयितुम् । अधुना कस्यै निवेदयामि, कया सह मन्त्रये ? न

विज्ञायते चित्राङ्गदाया गतिः, दूरे मन्दारिका, वर्षान्तरव्यवहितो गन्धर्वलोक इति चिन्तयन्तीमेवाभिनवकोकनदकेसरनिकरताम्रेण करेणोत्क्षिप्य तेजस्विनामृषीणां नक्षत्राणामिव मण्डले प्रभामिव मां प्रवेशयामास तेजसो राशिरवनिपतिकुमारमार्त्तण्डः ।

अथ तस्य लोकलोचनचकोरचन्द्रस्य सुधासारवर्षिणा करस्पर्शेन विकसितवदनकुसुमां कुमुद्वती(मि)व मां निभालयति निर्निमेषचक्षुषि विस्मयस्तिमिततारके तापससमाजे, वत्स ! विश्राम्य तावद् इत्यभिधाय राज्ञा सीरध्वजेन निजायामङ्कपालौ बलान्निवेशिते वृद्धानभिवादयति तस्मिन् बाहुजबटौ, मूर्त्तिमतीभिरिव करुणाभिस्तापसकुटुम्बिनीभिरुत्तरासङ्गचीरचीवराञ्चलास्फोटनेनापनीते ममाङ्गेषु मार्गरजोमलिनिमनि, गुरोराङ्गिरसस्य गोतमस्य करुणरसकूणितत्रिभागं चरणचक्षुरभिवीक्ष्य मयि विस्मितायामुपसंहृतब्रह्मसंविदानन्दवाष्पमपि नयनपुण्डरीकमाविर्भवद्दयारसद्विगुणेनाश्रुणा पूरयतः, विघटितसमाधिमुद्रमपि हृदयमापन्ता (न्ना)नुकम्पयान्तर्मुखं निमीलयतः, पुराणयोगिनो याज्ञवल्क्यस्य धिगस्तु विश्वकर्माणमिति वचसा वृत्तश्रवणकुतुकतरलतामुपयत्य(ति) विदितवेदितव्यानां मुनीनां मनसि, सर्वे एव वयमाकस्मिकस्फुटन्मार्त्तण्डमण्डलध्वनिचकिताः किमेतदिति गगनमार्गे निरक्षिपाम लोचनानि ।

ततस्त्रयीमयमण्डलस्य भगवतो भास्करस्य वपुषि यजुषा संवाधमवस्थातुमशक्तमृक्सामभिव पृथग्विभक्तं पुराणमुनीनाममीषामतिक्रान्तसर्वतेजसं समवायमवलोक्य स्पर्द्धमानेन मिहिरेण व्यूहितमिवापरं बिम्बद्वयमर्कवलयादधो लम्बमानं प्रभापिण्डयुगलमपश्यम् । तत्र तपनगोलतृतीये पिण्डितज्योतिर्मण्डलयुगले सर्वाः प्रभाः परिभवति व्योमरूपिणो विरूपाक्षस्य नयनत्रयमिति गगनसरसि त्रिमुनिप्रतिबिम्ब इति युगपल्लोकत्रयप्रकाशनानुग्रहात् त्रिधा व्यूहितो ग्रहपतिविग्रह इत्यमन्यन्त मुनयः । क्रमेण तज्ज्योतिष्पिण्डयुगलमतिसन्निकर्षविभक्तसर्वावयवं दिव्यपुरुषौ भूत्वा तत्रैव भुवि निपपात । जनकगोतमौ महामुनी तौ दिव्यपुरुषावुचितेन समुदाचारेण सभाजयामासतुः । स क्षत्रियब्रह्मचारी तु पादग्राहमभिवाद्य सविनयमवस्थितस्ताभ्यां पुरुषाभ्यामाघ्राय मूर्द्धनि प्रमदबाष्पसलिलकणलुलितलोचनमालिङ्गितस्तयोः समीप एवोपविवेश । याज्ञवल्क्योऽपि द्विगुणबाहुवेष्टनेन तौ दिव्यपुरुषावालिङ्ग्य ताभ्यामपि चिरविरहकातराभ्यां प्रत्यालिङ्गितो निजमासनवृषीमेव तयोरुपाकल्पयत् । आत्मना गोतमासनैकदेशे समुपविवेश। अनन्तरमुत्तरासङ्गवल्कलप्रान्तेनापसृ(मृ)ज्य प्रमदवाष्पकलुषे चक्षुषी गद्गदावसन्नस्खलिताक्षरमगदत्—

प्रियसखौ ! माढरपिङ्गलौ ! चिरादहमनुगृहीतो युवाभ्याम्, फलितं मम दीर्घेणायुषा, नावकेशिनो मे मनोरथतरवः, न निरर्थकानि समाधिव्रतानि। न विरसाः स्वाध्यायफलपरिपाकाः, नापार्थकानि धर्मतन्त्रप्रवर्त्तनानि, योऽहमायजुर्विद्यासमावर्त्तनादतिनृशंसो विहाय गुरुकुलमगमयं वयः, तस्मिन् मयि नि(ष्का)रणकरुणामयौ युवामखिललोकपावनालोकयोरात्मनो-र्दर्शनादीदृशीं मुदमर्पयथः। युज्यते वा लोकानुग्रहगृहीतविग्रहस्य परमार्थतश्चिदानन्दघनस्य सवितुः पारिपार्श्विकयोर्भवतोः का कृतप्रतिकृत-गवेषणा ? न खलु भगवानादित्यो दक्षिणामिव वामामपि दिशं प्रकाशेन नानुगृह्णाति, न चानुरक्तेयमिति मत्वा प्राचीमेव ककुभमालम्ब्यावतिष्ठते, यावदन्यासामपि मुखेषु तमोमलिनिमानमपमार्जयितुमभितो भ्रमति । भ्रातरौ ! कथयतममुष्य त्रयीमयमण्डलस्य जडतरजगत्प्रपञ्चचेतनशक्त्यधिष्ठातृदैवतस्य तत्रभवतो वरेण्येन नो धियः प्रचोदयता भर्गसा विभासितभुवनकोषस्य भगवतो भास्करस्यानामयम्। अपि मङ्गलमास्ते, वर्द्धते ब्रह्ममयेन वर्चसा तत्रभवानुपा-ध्यायः? कदापि वा स्मरति गुरुरन्तेवसन्तमेनमकृतज्ञमाचार्य्यपरिचर्य्याविमुख्यवञ्चितं जनम् ? अपिस्विदक्षतपतिव्रता परिचरति भर्त्तारमुपाध्यायी विश्वकर्मनन्दना संज्ञा ? कच्चिदनामयमासते ममाचार्य्यकुमाराः ? सेवन्ते वा भगवन्तमवसरेषु घृताचीप्रभृतयोऽप्सरस इति विरतवचसि मुनौ दिव्यपुरुषावूचतुः—

सखे ! ब्रह्मवादिनां प्रवर याज्ञवल्क्य ! सर्वतो वार्त्तमार्त्ताभ्युपपत्तिनिमित्तस्य भगवतो मित्रस्य किमनुचिन्तनीयमस्ति त्वादृशेनान्तेवासिना गृहीतसंप्रदायप्रवर्त्तन-भारस्य, कुमारेण मनुना सन्तायमानविश्वम्भराभारवहनप्रवीणापत्यसन्तानस्य, विशेषादिक्ष्वाकुणा तामसदस्युदलनेन स्वस्थीकृते त्रिभुवने निष्प्रत्यूहमटतो भर्त्तुर्विभा-करस्य। किन्त्वनेन क्रूरकर्मणा निकृतिपरेण विश्वकर्मणा शाणकषणक्षीणतां नीत-मात्मानमनुभवन्नपि न तथा व्यथामभजत, यथा वत्सस्य सुदेवस्य तनये कुसुम-सुकुमारवर्ष्मणि विदर्भाधिपतौ सुरथे सरस्वतीस्रोतसि प्रक्षिप्य तेनापवाहिते प्रणप्तृप्रीतिपरतन्त्रो दुर्मनायते । देवी च संज्ञा पितुरेवंविधया प्लवप्रकृत्या स्वसुश्चित्राङ्गदायाश्च तादृश्या कुमारीजनैरप्राप्तपूर्वया विपदा शोकलज्जाभ्यां न दर्शयति पत्युरात्मानम्, छायेवापवारिता पुरस्तिष्ठति, सुतरामिदानीमात्रेयेण मुनिना कपित्वमुपनीते तेन कन्दरमालितनयां वेदवतीं मदयन्तींच तां विपद-मापादयता दुर्यशोभिरभिपूरिते भुवने, विकर्त्तनकलत्रमप्यसौ तमसि मज्जति, तदेवं-विधं भवदुपाध्याययोर्मिथुनमवहित्थसंवरणानामगोचरेण व्रीडावैलक्ष्येण जलद-जम(व)निकान्तरितकलेवरतया निलीय प्रावृषमृतुमनयत् । इदानीं पुनरविकल-

बलाकादन्तुरै राकृष्टभुग्ननभःपादपविधुतनक्षत्रकुसुमैरुदकासारदानद्रवमसृणितधरणि-सरणिभिरुदग्ररोदोगिरिकषणसंक्रान्तया धातुधारयेव विद्युता विद्योतितविग्रहै-ग्रंहगणकपित्थफल (ग्र) सनगुरुतरोदरैरनवरतपीतोन्मुक्तसरस्वदवु (म्बु) निकरशीकर-परिपूरितपवनपथैरिन्द्रायुधक्षुण (ण्ण) पक्षतया क्षतगतीनचलाननेकविषयलङ्घन-जाङ्घिकत्वादुपहसद्भिरूर्ध्वंमुखजनप्रेक्षणीयैस्तमालकिसलयश्यामलैर्बलाहकवनदन्ता-वलैराक्रम्यावनम्य (मय्य) भज्यमानानामविरलकुटजकुसुमपरिमलसुरभीणामाशा-शल्लकीनामुन्माथध्वनितेनेव स्तनितेन किञ्चिदुन्मीलितनिद्राकषायनयने वनगर्भसुखप्रसुप्ते हरौ, तस्यैव पार्श्वपरिवर्त्तनजृम्भाहूङ्कारमाकर्ण्य भयादिव भ्रश्यद्भिरभ्रगजैरुज्झिते भुवनविपिने, प्रसादमुपगच्छता व्योमरूपिणा विरूपाक्षेण गौरीभाववरेण छन्दितायामिव रूपान्तरमापद्यमानायां कुलाचलादुद्भूतायां कालिकायाम्, सुधाकादम्बरीमत्तस्य धवलतनोरिन्दुकामपालस्य लीलया नीलमङ्क-वसनमाक्षिप्य तेन घनपदमास्थितेन पदमात्मनस्तिरोधाय पुष्पवन्तौ लोचने निमील्य स्वपतो नित्यप्रबुद्धस्यापि कपटनिद्रामुद्रितस्य वासुदेवस्य प्रबोधाय सारितकरे प्रावृडवसानापसरदभ्रकैतवेन तदेव वासो विष्णुपदादपकर्षति रेवती-पतौ, प्रवलवेगेन वारिवाहगरुत्मता निगीर्योद्गीर्णे विस्फुरति सदारे द्विजराजे, कलमधुरं ध्वनद्भिरभ्र (भ्र) मरैस्त्यक्ते दूरान्तरितमधौ पुष्करे, दाक्षायणीपरिभव-कुपितेन विधुतजलदगजत्वचा प्रसारितदशदिग्बाहुनोर्ध्ववर्द्धमानविग्रहेण गगन-वीरभद्रेण पुनरिव प्रवर्त्तिते मखमृगव्याधचरिते, स्तनितकुन्थितमुखरमुखीना-माकुञ्चितव्यथितवपुषां दिशां गर्भादुद्गतेन बालार्केण करग्राहमापीयमानरसे, प्रस्नवपयसेव धौतकालिमनि पयोधरे, मयूरकुलनृत्यावसानसमयोपसंहृते द्यावा-पृथिव्योरन्तरालजवनिकानिकाये, प्रवृत्तायां शरदि, निमित्तान्तरोपात्तमपि वस्तु निजेन दुर्यशसा प्रसूतमिति शङ्कते ।

तथाहि—काशसु (कु) सुमविकाशधवलामवलोक्य भूतधात्रीमुपहसति बन्धु-व्यसनमावयोरिति मन्यते, राजहंसच्छदच्छविचन्द्रिकावदातानि दिशामुखानि सोल्लुण्ठस्मितप्रसृतदशनद्युतिविशदानि मन्वानमतित्रपते, किमपरं निवेदयामि देव्या नासत्यमातुरावेगविलक्षवदनमवस्थान्तरम् ।

(ए) नां हि प्रत्यग्रसलिलोन्मज्जनविविक्तशुचिमूर्त्तिरार्द्रशैवलालकलता-लङ्कृताकृतिरालोलमधुरेन्द्रनीलमणिमालया केवलमुपकल्पिता कक्ष्याकमलिनी सपत्नी-जनसमुचितेन मत्सरेण विपक्षव्यसनपातप्रसाधितविग्रहेव साचिस्मितेन खेदयति, गन्ध-गजदानद्रवसुरभिणा सप्तच्छदगन्धेन विरचिताङ्गरागा विकचबाणकुसुममाणिक्य-मालया ललितमूर्त्तिरपवार्य तरुमूले निलीयावस्थिता छायापि मायामयी निजप्रकृति-

स्वहेलया नावलोकते, सहजविपक्षभावमत्सरिणी तरणिकान्ता शिलापि यावद्दर्शन-मतिशयितपरितापायाभिनयेन विडम्बयति, अन्तरितदर्शना हि शीतलेन वपुषा क्षपयति क्षपाः । तदेवमात्मना चात्मनोऽर्द्धेन जायया च दुःस्थितावस्थस्य दिशां पत्युः करस्पर्शमसहमाना इव विधुतजलदावगुण्ठनमुन्मदमरालकलरवनूपुर-क्वणितमुखरमुन्मिषितनक्षत्रमालाकिरणकरम्बितोदग्रगौरपीवरपयोधरभारमन्थर-मभिधावन्त्यो दूराद् दूरमपसरन्ति ककुभः । किञ्चानेन भगवता भास्करेण स्वकरावर्जितैर्बलाहककलशसलिलैराप्ररोहादभिवर्द्धिताः फलभरपरिपाकपाण्डुरेणा-ननेनावनमन्ति, व्यञ्जयन्ति चोपजीव्यव्यसनशुष्यमाणतनवो न चिरान्निज-निपातमशेषजनतर्पणचणशीलाः शालय इत्येवंविधमपि दिने दिने वर्द्धमानजडिमान-मपि वीतोत्तरासङ्गतया सन्निहितेन शिशिरेण परिभूयमाणमप्यमुष्मिन्नूर्जमासे भगवन्तमादित्यमुपासितुमप्सरसो घृताची चन्द्रलोकादवततार ।

ताञ्च पर्ज्जन्यविरहेण दूयमानाम्, स्फुटितमलिनाम्बराम्, प्रावृषमिव शरद्भयेन कालकलानामीश्वरस्य भगवतो भास्करस्य शरणमनुप्रपन्नाम्, शक्रकोपानलप्लोषमलिनाम्, कुलाचलदेवतामिवाशनिपातभीत्या शनिपितुरङ्के प्रविशन्तीम्, उद्दण्डशिखण्डिताण्डवनाटकनिर्बर्हणाद्भुतरसवृत्तिमिव, चित्रीयास्ति-मितजननयननिरीक्ष्यमाणामुपसंहृतनेपथ्यविविक्ताञ्च, शरदृतुलक्ष्मीमिव वीत-मृगमदाङ्गरागधवलपयोधरसंल्लग्नजलधारानुविद्धनयनपुण्डरीकाम् अतिप्रीत्या मानसनिवासिना हंसेन संगन्तुमागताञ्च, लङ्कामिव दैवतशापोपनीतकपिभयवे-पिताम्, अवनिमिव मायाविना तामसीं योनिमास्थितेन हरिष्यमाणायां दुहितरि चिन्तादूनहृदयाम्, रसातलदरीमिव वहुभुजङ्गभोगपरिमर्द्दसहामपि तमोविलुप्तया प्रतिपत्त्या शून्यामिवोपलभ्यमानामालोक्य लोकवृत्तसाक्षी भगवान् विदित (वेदित) व्यो मधुरमिदममन्त्रयत्—

मङ्गलमुखि घृताचि ! जानामि ते हृदयशल्यम्, असौ हि तव तनया वत्सा वेदवती मनुकुमारस्य मम नप्तुरिन्द्रद्युम्नस्य प्रियमहिषीति पूर्वमेव परिकल्पितमिदं वेधसा संविधानम् । एनामकाण्ड एव शपतः कौशिकस्य कुटिल-प्रकृतेर्व्यतिक्रमोऽपि मातुरदितेः पितुश्च मारीचस्य भगवतः कश्यपस्य छन्दानुवर्तिना मया ज्ञातेयविघटनभीतेन सोढव्य एव । जानास्येव मम सोदरेषु वात्सल्यम् ।

एकदा हि शताधिकक्रतुयाजिनं धुन्धुम्, अन्यदा धर्म्माध्वरदीक्षितं बलिं विप्रलभमानेनेन्द्रप्रोत्साहितेनोपेन्द्रेण पदक्रमेणाभिलङ्घितोऽपि नाकुप्यम् । इदानीमनेन लक्ष्मीमदमूढेन मघोना दैववशंवदेन शतमप्यपराध्यता न कुप्येयम्, नहि नियतिपरतन्त्रव्यवसायेषु प्राणिषु विद्यते कश्चिदपराधः,

न च लोकानुग्रहेणानवरतं परिभ्रमतो मादृशस्य युज्यते लोकोपप्लवाय कोपः, न च त्वयेदमुचितमनुष्ठितं यदखिललोकमङ्गलाय विश्वकर्मणि त्वामनुकूलयति प्रभौ पाकशासने तस्य शासनमतिक्रम्य प्रतिकूलमवर्त्तथाः। महात्मभ्यो भूभृतामधिपेभ्यो निर्गत्य निजच्छन्देन कमपि विषयमाक्रामन्ती प्रतिकूलं प्रवर्तयितुमशक्या न किञ्चिदात्मनः प्रियमनासाद्य विरमत्याज्ञासरस्वती। यदि कश्चिदेनामन्तरैव प्रतिहन्तुमारभते तदा महतीमुद्भ्रान्तिमज्जंयित्वा निकटगतानप्यनुकूलवर्त्तिनोऽपि भञ्जयत्यथवा पातयति, प्रतिघातकाननवसाद्य न प्रकृताववतिष्ठते, प्रत्युतोत्पथेन प्रवर्त्तमाना लोकानुपप्लवते।

किञ्च, यस्य षोडशीमपि कलामुपादायेशपदं भजत्यकिञ्चनो जनः, यस्य च पादानुद्गत्य मूर्द्ध्ना प्रतीच्छन्ति पूरिताशाबन्धा महात्मानः कुलमहीभृतः, येनोदयमारोहता रञ्जितभुवनेन मृदुना करेण विकाशमुपनीयते तीक्ष्णतया परोपतापिनालोकेन मुद्रिता कुमुद्वती, तस्याखण्डमण्डलस्य राजपदललितमूर्त्तेः प्रसादमसहमानायां त्वयि पद्मिनीजातौ निमीलनदुःस्थितायामवस्थातुमक्षमा कथं न प्रचसतु लक्ष्मीः, तत्र पर्ज्जन्यस्य का शक्तिस्त्वयि तथाविधायां पततो राजकरदण्डानचिरमपि निवारयितुम्, रसलोभात् त्वामिदानीमत्यजन्तो बन्धमेव केवलमनुभवन्ति। राजभयकण्टकितकलेवरे! सलिलदुर्गमनुप्रविष्टाया अपि तव दुर्लभमुन्मेषमधुना जानामि, परिणामे तु मम मिहिरस्य प्रसाद एव तव हरिष्यति विपदम्, आधेहि हृदि धैर्यम्, अवधारय मम सौहार्दपेशलं वचः, भजेदानीमपि विश्वकर्माणम्, अवसरे द्रक्ष्यसि प्रतिष्ठानपतेर्वत्सस्येन्द्रद्युम्नस्य प्रियमहिषीं दुहितरमित्युपदेशणर्भमादेशमर्कस्याकर्ण्य विबुधवार्द्धकिं विचेतुमवनिमवततार घृताची।

तामवतरन्तीमवलोकयितुमधो विस्फारितनयनो युष्मानेकत्र संगतान् आयुष्मतीं च मन्दोदरीमिमामिह वत्सेनेक्ष्वाकुनन्दनेनानेन गोतमस्यान्तेवसता ब्रह्मचरता समावृत्तकल्पविद्याव्रतेन दण्डेन गृहीतपाणिमस्मिन्ननुरक्तामवलोक्य वामादिदेश दिशांपतिः—

गच्छतं युवाम्, अत्र मुनीनां समवाये निमित्तेन केनाप्युपगतां मन्दोदरीं गन्धर्वाणां नगरमुपनीय चित्राङ्गदस्य गृहे निक्षिपतम्, अवसरे प्रतिग्रहीष्यामि प्रणप्तुरर्थे सुभगामिमामिति। अद्य नियोगमिममशून्यं कर्त्तुमवतीर्य युष्मत्समाजमागतावावामित्युपसंहृतवचसौ तौ स्वस्ति, साधु साधयतमित्यनुमतौ मुनिभिरचिरायु(दु)त्क्षिप्य मां कैलासमनयताम्। तातस्य चित्राङ्गदस्य द्वारि निक्षिप्य तयोस्तिरोहितयोर्यविच्चिरविप्रयोगकातरौ पितरावभिवाद्य त्वरिततरमागतस्य तातपर्ज्जन्यस्य पादयोरपतम्, तावदेव दशकन्धरभुजयन्त्रपीडनोत्खातमूलकैलास-

शैलबन्धविघटनस्तनितानुकारिणमत एव चकिताभिरवलम्बितभवनमध्यमस्तम्भाभि-रङ्काधिरोपितोत्तरीयावृतशिशुभिरश्रुमुखीभिराक्रोशमुखरविवर्णवदनाभिरलकापुर-पुरन्ध्रिभिराकर्ण्यमानम्, उपसंहृततौर्यत्रिकैरुत्त्रस्तकामिनीप्रसभगृहीतगण्डै-(ण्डै)र्गन्धर्वयुवभिरनुभूयमानसारभावम्, उत्खन्यमानबन्धुजीवपादपविदीर्य्यमाण-सन्धिबन्धस्य क्रीडापर्वतस्य वानरगलगर्जितोर्जितं ध्वनिमश्रृणवम् ।

अथापविद्धोत्क्षिप्तबन्धुजीवविटपमवलम्ब्याधोमुखीमूर्ध्वं धावन्तीं पर्जन्य-तनयां वेदवतीमपश्यदूर्ध्वमुखः सर्व एव लोकः, ततो बन्धुजीवेन सह निरालम्बं बभ्राम नो बन्धूनां जीवः, अस्माकमाशया सहैव लुप्ता पदवी वेदवत्याः, तात-पर्जन्यतनुलतया मूर्च्छितया सहैव भुवि पपात सुहृदामश्रुधारा । भगवन्नात्रेय ! तत्रेत्थमनुवर्त्तमाने दैवदुर्विपाकव्यतिकरे चित्राङ्गदाव्यसनादप्यधिकदुस्सहां वेदवत्या विपदं साक्षादुपलभ्य करुणमतितारं च मयि रुदत्यामनुभूतमदालसाहरणवृत्तान्त-शोकेनापि गन्धर्वलोकेनाननुभूतचर इवानुभूयमाने नियतिपरिपाकदुरन्ते, मुहूर्त्ता-दुपलभ्य चेतनां तपसि कृतनिश्चयस्तातपर्जन्यो गमिष्यति गन्धमादनमिति शनैर्निगद्य बन्धुभिरननुमतोऽपि वेदवत्याः कौमारक्रीडितोपकरणपेषीमादाय पश्चिमामाशां प्रतस्थे, तं च प्रव्रजन्तमखिल एव गन्धर्वलोकोऽनुवव्राज ।

मम पिता तु शून्येऽमुष्मिन् गन्धर्वपुरे मम निवासमरोचयन्मामपि सहैवानैषीत् । कतिपयैरहोभिरासाद्य गन्धमादनममुत्र नरनारायणचरणमुद्रा-सनाथशिलापीठे पुण्याश्रमैकदेशे निषद्य व्यसर्ज्जयदखिलमेव गन्धर्वकुलं पर्ज्जन्यः । चित्ररथचित्राङ्गदाङ्गारपर्णविश्वावसुवसुषेणप्रभृतयस्तु गन्धर्वास्ततो नातिदूरवर्त्ति गुह्यकानां नगरमगमन् । तत्र दुहित्रा पत्या च वियुक्तया चित्ररथतनयया सुलोचनया कृतयथोचितसमुदाचारास्तस्या दैवव्यसनोपनिपातविनोदनाय निवासमरोचयन् । चित्ररथोऽपि बहुविधाभिरितिहासकथाभिरेनामाश्वास-यन्नञ्जनस्य मदयन्त्याश्च विरहशोकमस्याः किञ्चिदपनिनाय । कठोरगर्भाया-स्तस्यास्तनयजन्ममहोत्सवसमयमनुपालयन्तो गन्धर्वा गुह्यकनगर एव बहून् वासरानगमयन् । एकदा पुनरिमा(रा)भिरेव गन्धर्वकुमारीभिः सहचरिता तातपर्जन्यपादयोरभिवादनाय नगरान्निर्गत्य नातिदूरे नारायणाश्रममगमम् ।

तत्र वेदवत्याः क्रीडनकपाञ्चालीमिथुनेषु, चित्रपरिकर्मसु, स-(प्र)वल्लिकाकोषेषु, बिन्दुमतीगूढचतुर्थादिचित्रलिपिषु, सर्वतो-भद्रगोमूत्रिकागतप्रत्यागतादिशिल्पविन्यासेषु, प्रबन्धकल्पनापुस्तकेषु, भूषणेषु, वसनेषु चोपकरणपेषीसंभृतेषु वारं वारमपह्नुतविवृतेषु, कदाचिन्नयन्त्योः,

कदाचिदुरसि, कदाचिदानने विनिवेशितेषु, जातुचिदायतोष्णश्वासवैश्वानर-स्पर्शभयेन दूरमपसारितेषु, विनोदितचक्षुषा, हाशब्दप्रणवोद्घातिमुखं वेदवती-संबुद्धिपदमन्त्रमसकृदावर्त्तयता, बहुधासंकल्पमोहोपकल्पितदुहितृकण्ठग्रहाय धावित्वा पुनरलीकमिदमिति विचेतनमवनौ पतता, भ्रमोपनीतया तनयया सह शून्यमनुभाषमाणेन, धातुरागेण पाषाणखण्डे लिखितां सुताप्रतिकृति-मङ्कनादाय मूर्द्धन्याजिघ्रता, मुहुरदत्तप्रतिवचनां तामेव पुत्रीप्रतिमां प्रसुप्तेति प्रबोधयता, कुपितेति लालयता, तौर्यत्रिकव्यापारपरिश्रान्तेति पादयोः संवाह-यता, चिरादनास्वादितस्तन्येत्यासन्नतरुफलरसमभ्यवहारयता, क्रीडाकौतुकात् सखीजनेभ्यो निलीय स्थितेत्युपहसता, मातृविरहदूनेत्याश्वासयता, कपि-भयादनिमिषलोचनेत्यनुशोचता, मया त्यक्ते क्रीडामणिपर्वतशिखरे साध्वसा-न्निःस्पन्देत्यभिरुदता, नगखण्डमाश्लिष्यावस्थिता वानरेणोत्क्षिप्यत इति हा धिगिति धावता, क्व सा तदीयानुकृतिरियमिति मूर्च्छता, जन्मनः प्रभृति यौवनोद्भेदावधि तत्तदखिलबन्धुहृदयदारणमात्मजाया ललितमनुसन्धाय कठिनशिलाघनेषु लुठता, तदानीमेतावति वियन्मार्गे विलोकिता वत्सेति सबहु-मानमुपरि पश्यता, पुनस्तस्य बन्धुजीवतरोः परावृत्य पतनप्रत्याशयोन्मुखमेव तिष्ठता, विद्युता विद्योतितं बलाहकखण्डमवलोक्य विस्फुरितवेदवती-विग्रहोऽयं बन्धुजीव इति प्रहर्षादादातुमुत्पतता, व्योमवर्त्मनः पतन्तमिरम्मद-मपि सलिलासारमपि करकोपलमपि शकुनिमपि ध्वनिमपि पवनमपि रवि-करनिकरमपि कुशलमास्ते क्वचिदुपलब्धा त्वया वत्सेति पृच्छता, भगवतो भूतपतेर्भीमस्य पञ्चमी तनुरसि, जानासि विपन्नाभ्युपपत्तिविधिम्, त्वयि विलीनं वपुर्वत्सायास्त्वमेव पालयिष्यसीति याचनदैन्यदूनया गिरा गगन-मालिङ्गता, दुश्चिकित्सं वत्सलोन्मादमुद्वहता, बहुलपक्षेन्दुने (व) प्रतिपदोप-क्रान्ततनुतेजोवसादेन, कपर्दिनेव ज्वलदनलतुल्यातुलविषादेन, तुरीयवर्णेनेव निर्वेदकुण्ठितत्वादपास्तबहुकर्मणा, पर्ज्जन्यपदसमुचितनिपतदश्रुसलिला-सारपिच्छिलपुरोभागेन तेन हेमकूटसभानायकेन गाथासु घुष्यमाणगुण-शताम्, सिकतासूल्लिख्यमानमूर्त्तिम्, उपलप्रतिमासु प्रतिष्ठाप्यमानप्राणाम्, आकाशभित्तौ चित्तचित्रतूलिकया लिख्यमानाकाराम्, अनुध्यानचिन्तया दिशि परिकल्प्यमानरूपाम्, अपरिचितनिमेषनिःप्र (ष्प्र) त्यूहमन्तर्मुखेन चक्षुषा निरन्तरनिरीक्ष्यमाणाम्, प्रियसखीं वेदवतीमहमपि तत्कालाविर्भूते-नोन्मादविभ्रमेण साक्षादिवाद्राक्षम् ।

अथ चिरात् प्राप्तविवेकां पादयोः प्रणिपत्योत्थितां मामवलोक्य द्विगुणवर्द्धमानबाष्पपूरः सुचिरमनुसन्धाय, विधूय जर्ज्जरितबाष्पसलिलधार-

कूणितनयनम्, आकुञ्चितनासिकानिरोधमांसलश्वासविक्लववदनम्, शिरोव्रिषादप्रणष्टस्मृतिविच्छिन्नाक्षरम्, उदाजहार तातपर्ज्जन्यः—वत्से! मन्दोदरि! चिरेण निरीक्षिता स्मारयसि सौहृदं वेदवत्याः, सा हि त्वयि चित्राङ्गदया सह चिरप्रोषितायामविदितगतौ न मयि, न निजायां मातरि, न बन्धुषु, नेतरासु सहचरीषु, न गीतेषु, न कलासु, न चित्रेषु, न मित्रेषु, तथा प्रीतिमकरोत्, उन्मनायमाना त्वामनुध्यायन्ती तव गुणानेव सततमनुवर्णयन्ती दिनानि गमयामास। हा! सम्प्रति विशेषेण मुषितोऽस्मि, स्मरामि वत्सायास्त्वामाश्रित्य प्रीतिपेलवानि वचनानि।

तथा हि—तात! धिगस्तु मामकृतज्ञामतत्त्वकोविदां प्रीतितन्त्रस्य। या(साऽ)हमस्मिन् प्रियसख्या मन्दोदर्या दैवेन सुहृज्जनस्नेहेन वोपनीते व्यसने न तामनुव्रजामि, न तस्या दिगन्तरभ्रमणसाहायकेन कृतार्थयामि प्रेम, न संविभजामि बाष्पवारिधाराम्। अपि स किं प्रणयो यत्र पृथगवस्थितानि सुखदुःखानि। स किं परिचयो यस्मिन्नेकस्य व्यसनमपरत्र स्वच्छतया निसर्गशुद्धिमत्तया च स्फटिकमणिमनुकुर्वति प्रतिबिम्ब इव न संक्रामति, स किं प्रणयी यत्र पांशुपूरवदनार्द्रे प्रक्षिप्तः स्नेहरसो न परेषामवस्थानुकरणं प्रतिसंक्रामयति। तस्य जडस्य किं प्रकृतिशीतलतया किन्तरां पावनतया किन्तमामच्छत्वेन यत्र निसर्गचपले नीचानुसारिणि स्तोकादपि विमर्दादामूलतरलिमानमुपयति, सलिलाशय इव बहिरेव प्रसरति, स्तोकमपि क्वा(ना)न्तः प्रविशति स्नेहलवः। जानामि विपदि वर्त्तमानेषु केवलं प्रकटयन्ति प्रेमाणमखिललोकवन्दितचरणा महात्मानः। निदर्शनमत्र नियतिवशेन चरमाचलं प्रविशति मयूखमालिनि प्रसरदनुरागनिर्भरस्थगितगगनमण्डला भगवती पितृप्रसूः, केचन निशीथिनीयामा इव तमालप्रसवा इवारम्भ एव मुखरागं दर्शयन्ति, परिणामे मलीमसच्छायतया जनानां नयनान्युद्वे(द्वे)जयन्ति। परे पुनः कपय इव कीरा इव मुखेनैव नित्यमनुरज्यन्ते, न तु सर्वात्मना। ते तु द्वित्रा एव लोकललाममणयो येषां गुञ्जाप्रसवानामिव किंशुककुसुमानामिव न मुखे नारम्भे चोपलभ्यते सकलप्रतीकव्यापी यथापरिणति व्यक्तीभवन्ननुरागः। संध्यायास्तु किं वर्णयामि यावदनुरागावस्थायि लोकोत्तरं जीवितम्, केवलमस्यै स्पर्द्धेत प्रियसखी मन्दोदरी।

सा हि चित्राङ्गदायाः कृते परित्यक्तबान्धवसमाजा जीवत्स्वपि गन्धर्वेष्वशरणेव दिगन्तराणि भ्रमन्ती न गणयति पितरौ, न जीवितम्,

न निधनाद्बिभेति, न पिशुनेभ्यस्त्रस्यति, नानन्दमपेक्षते, न व्यलीकं द्वेष्टि, न परिचयोचिताद्व्यवसायात् प्रमाद्यति, केवलं प्रियसखी-सौहार्दमैरेयरसास्वादमत्ता मेदिनीमटति। किमपरम्, एनामनुकर्त्तुं न क्षमते प्रेमपारावारपारीणचरित्रापि चित्राङ्गदा। वयं तु प्रेमपरिपाक-रसास्वादवञ्चिताः क्व गण्यामहे, भविष्यति स दिवसो यत्र मन्दोदरीं द्रक्ष्यामीति। सोऽयमस्यास्त्वदवलोकनमनोरथो वानरेण वा पुरन्दरेण वा दैवेन वा त्वदागमनसमय एव तां तिरोदधता विलुप्तः। विधिवञ्चित एष सकल एव जीवलोको गन्धर्वग्रामो वाऽयमेव हताशो जनो वा, यो रोहिण्येव चन्द्रकलाम्, त्वया संगतां वेदवतीं न ददर्श। हा! सम्प्रति सर्वतो निराशस्य गन्धर्वकुलस्य चित्राङ्गदपुत्रि! त्वमेव केवलमवलम्बनम्। पश्य, विश्वावसु-दुहितुरनुसूयायाश्चित्राङ्गदाव्यसनादप्यधिकदुस्सहः पपात पत्यौ विश्वकर्म्म-ण्यात्रेयशापः। चित्ररथसुता सुलोचना वत्सया मदयन्त्या गुह्यकराजेनाञ्जनेन च युगपदेव दैवेन व्ययोज्यत। कामपि गतिमापेदे वत्सा वेदवतीति नानाविधा विपदियमापतिता गीर्वाणगायनकुलजानाम्। एका त्वमवशिष्यसे। त्वयापि दुहितृमतां धुरि प्रतिष्ठिता वयमासादयेम श्लाघ्यं सम्बन्धिनम्, असकृदनु-मन्त्रिताः स्मो वैवस्वतेन मनुना गन्धर्वसंन्ततिभिरेव धर्मदारपरिग्राहिणो मदन्वयधुरन्धरा इति सर्वतो गोपाय त्वमात्मानम्।

इति विरमति पर्जन्यवचसि, राजहंसीव किञ्चिदकूजम्—तात! माठर-पिङ्गलौ नाम मार्त्तण्डपारिपार्श्विकौ गोतमाश्रमे समवेतानां महामुनीनां सदसि भगवतः कालत्रयसाक्षिणो हरिताश्वस्य वचनमन्ववदताम्—भज घृताचि! विश्व-कर्माणम्, अनेन पाकशासनशासनपरिपालनेन व्यपेतशापानुशया द्रक्ष्यसि वत्सेन प्रतिष्ठानपतिनेन्द्रद्युम्नेन गृहीतपाणिं वेदवतीमिति विकर्त्तनप्रसादवचनसमनन्तरमम्बा घृताची विबुधवार्द्धकिं विचेतुमवनिमवततार, इति तयोर्वचनादेव निरचिनवम्। अतो नोचितो भवता प्राकृतेनेव जनेन परिहर्त्तुमयुतसिद्धो धीरभाव इति मम वचनसमनन्तरं गुहागृहादुद्गत्य परिचित इव कोऽपि पुरुषो मदभिमुखमुपासर्पत्।

एनमनवरतरुदितशोणनयनकोकनदच्छविच्छटानुविद्धेन विरहपाण्डुना मुखेनोदयारूढदिनकरकरनिकरालिङ्गनकडारमहर्मुखहिममयूखमण्डलमनुहरन्तम्, आयतश्वासवातद्विगुणवेल्लितमन्युविस्फुरिताधरम्, उत्पातपवनाभिघात-वर्द्धितचपलिमस्वभावेन पल्लवेनालङ्कृतमिव बोधिपादपम्, उद्भूतस्थूलधमनि-संततेन धमधमायमानसध्येन निर्मांसव्यक्तपार्श्वपञ्जरसन्धिबन्धेन विगलदश्रु-

सलिलार्द्रेण वक्षसा प्रलयार्णवादादिवराहदंष्ट्राशिखरोद्ध्रियमाणामप्सु विलीनमृदमुपलघाटीशेषपर्वतविषमामवनिमनुकुर्वाणम्, उत्सर्पिलावण्यपरिणाहपूरणादविभाव्यबाहुदण्डक(कृ)शिमानम्, ऊरुमूलावरणपर्याप्तचीरचीवराधरीणम्, अतिकठोरपाषाणखण्डासनघर्षणकिणविवर्णाधरार्द्धेन भसितोद्धूलनधूसरोपरिभागेनोरुयुगलेन वयःपरिणामवशादसितधवलाधरोर्ध्वस्य मातङ्गकरदण्डस्य द्राघिमाणमुपहसन्तम्, आनैमिषवृत्तान्तात् कतिपयैरहोभिरुन्मुच्य जलदनीलतामतरलतडिल्लताकडारतामुपगतेन सततमेव धूर्ज्जटिना स्पर्द्धमानस्य मकरध्वजस्य प्रसादाद्वर्णान्तिरमुप(ग)तेनेवापरेण कालिकाविग्रहेण जटाभावविकृतेन केशपाशेनाप्रपदविलम्बिना मांसलितचरणनलिननखमयूखकिञ्जल्कम्, अपमुषितहृदयतया शून्यमिव, तिरोहितपूर्वावस्थतया जन्मान्तरापन्नमिव, निधिमिव निर्वेदस्य, राशिमिव दीनतायाः, समूहमिव ज्यानेः, निचयमिव चिन्तासन्ततेः, समाजमिव मोहस्य, कोषमिवावेगस्य, मूर्त्तिमिव करुणस्य, शरीरमिव शोकस्य, च(व)पुरिव मन्मथभयस्य, तं तथाविधं चिरस्य सखायमवलोक्य किमपीदमभूतपूर्वं भूतमिति भीता कोऽप्यहमिवैष मित्रव्यसनवि(र)हस्त इति सकरुणा दशासंभेदमुकुलितया दृशा सुचिरं न्यरूपयम् ।

अथ गुणदोषपरीक्षाविचक्षणेन चित्राङ्गदाचक्षुषा प्रथमदर्शने परीक्षितस्य सर्वसंपदतिशायिनो निरर्घस्य लावण्यमणेरितरत्राभवता दुर्विपाकरजःप्रसरति रोहितेनापीषदाविर्भवता चमत्कारेण चेतिता चिरान्निरचिनवम्—एष स महाभागः प्रवरः कुलमहीभृताम्, एनमाश्रित्य प्रवर्त्तन्ते दैवदुश्चरितसरितां प्रवाहाः, यैरपवाहिता वयमद्यापि न प्रपद्यामहे व्यसनावसानम्, अहो ! कुटिला गतिरियं नियतिप(यः)पूरतन्त्राणाम्, यदेनं पुनरासादयाम इति निश्चित्य चिन्तयन्तीमेव मामसौ प्रियसखो दैन्यदूनया विलक्षरूक्षमन्दाक्षतरलतारकया हर्षरभसप्रसृतया चिन्ताजडिमस्तिमितया क्षणमाकुञ्चिताविरलपक्ष्मणा क्षणमुल्लङ्घितश्रुतिसीमया दृशा ग्लपयन्निव, शोषयन्निव, आर्द्रतां नयन्निव, पिबन्निव, वमन्निव, प्रथममानन्दवाष्पसलिलधाराधौतपाण्डुरकपोलेन, ततो मन्युविस्फुरदधरकिसलयमञ्जुना, अनन्तरमावेगावसन्नमन्थरसनेन मुखेन, किमपि वक्तुमारेभे । तस्य किमपि विवक्षतो मदनशरप्रहारवेदनाकूणितेन त्रिभागेन निर्भरापराधिनमेनं जनं नानु(ब)भाषे, भाषमाणापि वा किमियमभिधास्यतीति शङ्कया सङ्कुचन्ती मयि पपात दृष्टिः ।

अथ कथमपि संस्तभ्यात्मानमतिमन्दकरुणमुन्मिषन्मन्दाक्षमन्थराक्षरमावेगधूमायितविवर्णवर्णावलि निजगाद—प्रियसखि ! मन्दोदरि ! यथा क्षणविलासविद्योतितजगता विद्युतेव विना वाष्पवर्षबलाहकस्य मम जीवनवहनमपि केवलं मालिन्याय, त्वमपि प्रकृतिशीतला लोकलोचनकादम्बिनील (न) प्रकाशसे, तमांसि केवलमर्ज्जयित्वा मोहयस्येनमापदा कान्दिशीकं जनम्, सा तव प्रियसहचरी किं निरालोकान्धतमसाकुले का(क्वा)पि लोके निवसति ? किमुत परितः प्रसर्पता निरिन्धनमायासु ज्वलता सर्वजनविच्छायीकरणदवथुसंज्वरेण नियतिदुर्विपाकपावकेन क्वथ्यते ? येन छायेव सततमनुव्रता त्वमपि तामत्यजः । किमसौ पद्मिनीजातिराजन्मनो बद्धसौहृदेन त्वया मित्रेण विरहिता कलङ्कितराजपदस्य मम स्पर्शेन निमीलिता व्यसनावसानसमयमनुमालयन्ती मलिनैवालिभिस्त्यक्तैव यथा कयापि वृत्त्या जीवनमाश्रित्य गमयति गणरात्रम् ? आहोस्विन्निरवलम्बे पथि भ्रमित्वा निश्शेषत्यक्तजीवनेन क्षालितव्यसनमालिन्येन यशोधवलिमशेषेण वपुषा शरदभ्रराजिरिव हंसानामपि स्पृहणीयचरिता बभूव ? किं कोपनस्यापि पितुरेव पदमनुससार ? किं पितृपतेः ? किं मात्रा समगच्छत ? किमुत मृत्युना ? किं यदृच्छया युवाभ्यां प्रियसखीभ्याममुच्यत, किं चेतनयापि ? किं तेनैव वपुषा पितृवसतिमाससाद ? किमपरेण ? किमभ्युपपन्ना बन्धुभिरुत निर्वाणेन ? वद किं विलम्बसे ! वीतप्रत्याशाबन्धमपध्वंसते मम हृदयम्, असहोऽस्मि मृषाशरीरस्य धारणे, न खलु जीवन्तं सुहृदमुपेक्ष्य वर्तेत त्वादृशः कृतज्ञो जनः, यदि च जीवति, तदा कथय किमारभते ? कां दिशमलंकरोति ? कस्य जनपदस्य भूषणं भवति ? केन व्यापारेण गमयति दीर्घाणि व्यसनदिनानि ? कस्माद्विसस्मार मादृशं दासजनम् ? अद्यापि नैतयोर्दग्धनयनयोरेकदाप्यतिथिरभूदिति सख्युरनाख्येयविक्लवमनुयोगमाकर्णयन्ती प्रत्यक्षमिव शौनकाश्रमाभ्यासवृत्तान्तमनुपश्यन्ती तस्य प्रियसखस्य वटविटपितटे प्रथमदर्शनसमयवर्तिनमात्मानं मन्यमाना भ्रमविकल्पोपनीतया चित्राङ्गदया सह तथैव चरन्ती मन्दारिकाप्रश्नवचनसमनन्तरमभि (ह) तंकरणतया विहस्तममुं महाभागमेनां च त्वष्टृतनयामात्मार्पणव्यवसायसाहसिक्यबद्धपरिकरामप्रतिपत्तिमूढमानसां च मन्दारिकामुन्मादमोहोपायनीकृतं सर्वमेव तं व्यतिकरमनुध्यानाभ्यासंसंस्कारदृढिम्ना साक्षादिव निरीक्षमाणा पुनरपि कोपनात् पितुर्विश्वकर्मणो भीता साहसिनि ! कस्तवायं व्यवसाय इत्यनभिजातैरक्षरैरुपालभ्य सुहृज्जनमखेदयम् ।

अ(न)न्तरं तातशापवदकाण्डाविर्भूतया चेतनया निवारितदर्शने दूरमन्तरिते प्रियसखीजने क्षमेवैकमुत्तरवचनश्रवणलालसोत्कण्ठमप्रसो

बद्धाञ्जलिमवस्थितं प्रियसखमपश्यम् । अस्य दर्शनेन द्विगुणप्रवृद्धशोकावेगवेगापवाहिता न क्वचिदपि क्षणमवस्थातुमशक्नुवम् । असकृदासादितभ्रमिसहस्रपरिवर्तनश्रमेण निस्सहा कुत्राप्यगाधे निरवलम्बं मज्जतो निजस्यात्मनोऽवष्टम्भमलभमाना हा ! प्रियसखि ! इति तारमाक्रुश्य मोहमविशम् । कतिपयमुहूर्त्तान्तरेण प्रतिबुद्धा तु विस्मृतदुहितृव्यसनशोकेन करणसरित्पूरपरिपूरणाय पर्याप्तमाश्वसिहि इति वचनामृतं वर्षता तातपर्ज्जन्येन कशिमभूषिताभ्यामपि महासत्त्वतया दुर्व्यतिक्रमाभ्यां भुजाभ्यामवष्टभ्य नियमितमवनौ विचेष्टमानं विचेतनमेनं महाभागमग्रतो निरवर्णयम् ।

अथैकयापि पलितधवलिमानुविद्धप्रकृतिकपिलधम्मिल्लविस्खलनविकीर्णचिकुरनिकरसंकुलेन, विषादसंकुचितेन, प्रत्यूषावसानसमयधूसरदिवाकरकरनिकुरम्बपरिवारणमुद्रितेनेव कुवलयेन, स्वेदसलिलोदयबिन्दुकितायतललाटफलकेन, दिविषदवलीढावशिष्टपीयूषकणविलुलितपरभागेनेव बहुलनिशीथिनीनिशानाथमण्डलेन, केनापि हेतुना द्विगुणितमलिनिम्ना मुखेन प्रकाशितातिशयितशोकया निसर्गदीर्घविरलोज्ज्वलदशनशलाकान्तरालविवृतरागस्य करिकरपुष्कराग्रभागपृथुलस्य कपोलमध्यपर्यन्तायतसृक्वणोऽधरस्य तुषारधाराच्छेदान्तरितविच्छिन्नदीर्घस्येव गैरिकगिरिसानोरूर्ध्वंवर्द्धमानया रुचा संगत्य कडारतरतामुपगतयोराकपिलधूसरतरतारकातारल्यविडम्बितप्रभातगगनाभोगयोः करभकग्रीवारोमविवर्णेन श्वाविदङ्गकण्टकसूचिकर्कशेन गलदविच्छिन्नबाष्पबद्धवेणिकेन पक्ष्मपटलेन वेष्टितयोर्नयनगोलयोर्युगलेन, रक्तोपलखण्डकठोरदीर्घाङ्गुलिदलेन करकोकनदेन च भीषणयापि जात्याकृतिविरुद्धकारुण्यरसया निशाचरवृद्धया जलार्द्रपवनेन वीज्यमानमात्मानं चापश्यम् ।

असौ तु प्रतिपन्नचेतनामालोक्य मामामन्द्रघर्घरेण स्वरेण बभाषे— वत्से मन्दोदरि ! सुकेशिनी नाम निशाचरी शलकटङ्कटदुहितास्मि । दृष्टा मया कनकपुरात् प्रतिनिवर्त्तमानया हाटकेश्वरनिकटे चित्राङ्गदां मदयन्तीवेदवत्यौ च समवेताः, त्यज परितापम्, इमावाश्वासय पर्ज्जन्यसुरथौ, अनवसरोऽयं विस्ताराख्यानस्य, त्वरितपदं व्रजाम्यञ्जनगिरिमञ्जनाय निवेदयितुमेनं वृत्तान्तम् इत्यभिधाय तिरोभवन्त्यामापन्नजनपरितापप्रशमनाय कुतश्चिदाविर्भूतायामिन्दीवरदलसोदरद्युतौ निशाचरकुल-

कुलकुलाचलोद्गतायां सुकेशिनीकादम्बिन्यां न केवलमस्मदाशा, यावत्प्रसादमुपजगाम पर्ज्जन्योऽपि। प्रहर्षेण कलमधुरं चुकूज स राजहंसः।

ततोऽहमेनाभिः सहचरीभिरपरित्यक्ता गन्धर्वकुलमनापृच्छ्यैव गन्धमादनादवतीर्य्य दक्षिणोत्तरायतेन मार्गेण हिमवन्तमलङ्घयम्। छायेव मामनुव्रजन्नेतावतीं भूमिमागतः सुरथः, ततो मानवस्येक्ष्वाकोः पादावभिवाद्य द्रक्ष्यामि हाटकेश्वरं तव सखीं चेति मामापृच्छ्य कोशलानगात्। वयमपि विदूरबन्धवः सुरथवियोगबाधिताश्चाद्यापि विप्रकृष्टमेव सप्तगोदावरम्, यत्र चित्राङ्गदा, न चाभिज्ञायते हाटकेश्वराभिगामिनी सरणिरिति विषण्णा इह कुल्लि-(ट्टि)मवेदौ निषण्णा मुहूर्त्तादभवाम भगवत्पाददर्शनानन्दभाजनम् इत्यभिधाय जोषमासीनायां विदितवेदितव्येनात्रेयेण मुनिना प्रशस्य तस्याः सौहृदमाशीर्भिरभिवर्ध्यादर्श्यत स मार्गः, येन मन्दोदरी तमुद्देशमाजगाम, यत्र समयमन्वपालयच्चित्राङ्गदा ॥

इति श्रीगोकुलनाथसूक्तौ कथायां मन्दोदरीचरितं नाम पञ्चममाख्यानकम् ॥

---

## षष्ठमाख्यानकम्

अथ पुष्करनामतीर्थादाश्रममागत्य तत्राग्निशरणद्वारि शिलायां मदयन्त्या लिखितस्यौपच्छन्दसिकस्य विषयं प्रणिधानादधिगत्य कोशलानृतध्वजो जगाम। तत्र परिणतगजदन्ताभिघातव्रणविवरपूरणोद्वृत्तनिर्य्यासमसृणप्रकाण्डैः, उद्ग्रीवकरभकभुक्तशेषविरलदलैः, उदग्ररथकू(व)रव्यतिकरवक्रविटपैः, परिपाकपाटलफलपटललुब्धेन सततनरसहवासवीतसाध्वसेनाध(ध्व)नीनजनोद्वेजनान्योन्यकलहकलकलाकुलेन काकोलकुलेन संकुलतया जलदजालोपासितैरिव निरन्तरशिशिरच्छायैः, अनवरतोत्पतद्धूलिधोरणिभिरन्धकारितैः, उभयतटावरोपितैः पिचुमर्दतरुभिः परिच्छिन्नया, वेलायुगलनियमितसीमयेव जलधिलेखया, क्वचिदुद्दामद्विरह(द)दानद्रवप्रवाहजम्बालवर्त्मनाऽनुव्रजद्भिर्निश्शेषमग्नचक्रैरन्तर्गुलुगुलायमानप्रधिध्वनिभिरामूलनिह्नुतचरणविकलप्लवमानहयैस्तरद्भिरिव कर्णीरथैः संकीर्णया, क्वचिदचिरोदितखररोचिरु(रु)रुचिमण्डलकडारैरुत्तप्तचामीकरक्षोदकपिलैरनवरतसंचरत्प्राणिचरणाभिघातसातत्येन त्रसरेणोरपि सूक्ष्मतामुपनीतैरविरतमागत्य स्थगितगगनमण्डलैरनारतमनिलवेगेनापवाह्य दिगन्तमुपनीतैरपि पुनरनिशजनगतागतवशात्तथैवोद्धवद्भिर्द्धरावर( वर्णिनी )विशेषकधातुपिष्टैरशेषभुवनलक्ष्मीवशीकरणचूर्णैराशाकिशोरीक्रीडनकपटवासैरविधवनगरलक्ष्मीसीमन्तप्रसाधनसिन्दूरयागु(पांशु)भिररुणस्येव सन्ध्यारागकलाविस्तारणनीविधनैः, सायन्तनारुणिमरञ्जितानिव बलाहकान्, बालातपावलीढानिव कज्जलाचलसानून्, अन्तरितनीलिमगुणान् मददन्तावलान् (गै) रिकक्षोदलेपैरिव लिम्पद्भिः, गन्धर्वनगरमिव क्षणादपह्नुतविवृतमश्वानीकं दर्शयद्भिः, तितउचालितैरिव व्यतिक्रान्तक्रूरकर्करप्रकरैरूरुदघ्नगभीरैररुणधरणिरजोभिर्दुस्तरया, क्वापि विधुतमूर्द्धसंघट्टितपरस्परविषाणकोटिनिष्पेषघोषभीषणैः, त्रुटितनस्यैरायतसूत्कारिभिरुक्षतरैर्विविधाभिस्तनुभङ्गिभिरुह्यमानस्य भारगुरुणो वणिग्ग्रामा(पस्क)रिणः क्षणोद्भूतविलुप्तेन नेमिपदवीचिह्नेन निमिषदन्तुरया, पादपातादुत्पततः पार्थिवस्यातिसूक्ष्मस्य रजसोऽपि निरवकाशत्वादुद्गम(म)सहमानेन निर्भरनिष्पीडितान्योन्यकलेवरनिप्र(ष्प्र)यत्नेन पूर्वपूर्वप्रेरणया परं परं विषयमीषदाक्रामता प्रत्यावर्त्तमानतथाविधजनमर्दसंगत्या प्रतिकूलमपि प्रवर्त्तमानेन समासन्नद्रुमशिखरादवप्लुत्य नरशिरःसु निरातङ्कपरिप्लवमानानुष्णीष-

पटमाच्छिद्य धावतः कराकृष्टकेशपाशानुपवनकपीनपि प्रतिकर्त्तुमक्षमेण नरमयीमवनिमाननारविन्दवनमयमाकाशमुपदर्शयता मथ्यमानजलनिधिध्वनिधारानुकारिकोलाहलमुखरेण मनुष्यसंबाधेन निरन्तरया, प्रान्तसीमपादपमूलनिलीनान्धबधिरकुब्जमूकवर्वरप्रायदीनजनयाचनवचनकाकुकरुणार्द्रकपर्दकवदान्यजानपदया, क्वचिदैन्द्रजालिकारब्धकुहककौतुकाकृष्टग्रामीणजनवद्धचक्रवालया, क्वचिच्चारणगणगीयमानमानववंशप्रशस्तिशतश्रवणपुलकितस्तिमितायोध्व(ध्य)काध्वनीनया, क्वचिदासन्नवेशभवनवातायनन्यस्तवदनचन्द्रमण्डलाभिरामोदिमृगमदाङ्गरागाकृष्टमधुकरनिकरहूङ्कारकैतवेन प्रकटितविब्बोककुटिलभ्रुकुटीकामकोदण्डखण्डगुणटङ्काराभिः प्रकृतिसाचिस्मितवलि(डि)शविद्धजननयनमीनाभिर्गणकामिनीभिराकृष्यमाणपथिकविटया, क्वचिदास्तीर्णनानाविधाभ्यवहरणीयपण्यपूर्णकृतकापणया, क्वचिद्गव्यूतिविच्छेदसूचकविपुलकूपतटवटविटपिच्छायाविश्राम्यदध्वश्रमक्लान्तलोकास्फोटितचरणधूलीधूसरया, क्वचिन्मधुरपूर्वाभिभाषिणीभिर्नित्यमुपकल्पितचरणशौचकरकाभिरासादितकोमलासनाभिः प्रथमवितीर्णधानामुष्टिसमनन्तरार्पितशिशिरसुरभिस्वादुसलिलधाराभिर्न केवलं रसास्वादगुडजिह्विकया धनमेव किन्तु हृदयमपि पान्थानामपहरन्तीभिरनतिक्रान्तषोडशहायनाभिर्न केनापि सर्वेण वा परिगृहीताभिः कन्याजनाजीवानां कुले जाताभिर्युवतिभिः पाल्यमानप्रपया, पातालकन्दरयेवाश्वतरनागकुलसंकुलया, कैलासशिखरभुवेव गन्धर्वव्रजसेवितया, क्षुद्रसरितेव नक्रमेलकरहितया, चित्रकविगाथयेव दृश्यमानगोमूत्रिकागतप्रत्यागतादिपदभङ्गिभिरद्भुतया, बहुल(न)त्वविस्तीर्णया, कोशलनगरगोपुरपर्य्यन्तदीर्घया, राजपथवीथ्या बहूनि योजनानि केनापि सविनयमभिवादितः, केनापि करुणया करे गृहीत्वा गजमदपङ्कसंकटादुत्तारितः, केनाप्युदस्तभारविवृतविकटपृष्ठाद्रथनेमिनिर्घोषचकिताद्विक्रुतमुत्प्लवमानात् करभकाद् बिभ्यदुत्तालमुपहसितः, कथं कथमपि कृच्छ्रेण विलल‍ङ्घे।

ततः क्रमादुत्तरकोशलानगरोपशल्यसीमानमासाद्य परितः सुधालेपधवलेषु मध्ये गभीराशयतया तमालदलसच्छविच्छायेषु सर्वदैवतर्षिजनेन पीत्वा क्षयमुपनीयमानस्यापि न चिरादुद्भूय पूर्णतामुपगतस्य प्रतिपदावृत्तोपचयापचयस्य सकलकरणतर्पणस्य तुहिनसारशीतलस्यामृतस्य निधिषु निदाघदूनजननयनदवथुव्यथाप्रमाथिषु कूपक्षपाकरेषु जलयन्त्रघटीभिरेकत्रादीयमानमपरत्रोन्मुच्यमानमाशामुखविस्तारिपवनधुवननिपतदुपवनावरणकेतकीपरागाप-

कर्षणधवलं जलमवलोक्य राहुणा निपीयोद्वान्तामभितो विप्रकीर्णां कौमुदीमशङ्कत ।

तेन जलयन्त्रघटीपीतोज्झितेन परिपूरितनिपानोच्छ्वसितेनोदपानपानीयेन चतस्रो दिशः कृतकसरिद्भावेन प्रसर्पता परमेष्ठिकरकमुखनिष्ठ्यूतस्य धूर्जटिजटावेष्टनकटाहपरिणाहप्लावनोच्छलितस्य प्रतिदिशव्यूहितचतुर्द्वारस्य सुरसरितः प्रवाहस्यानुरूपेण सततं संगत्य कदापि शोषमभजतो नित्यमेव दूर्वादलश्यामलानविरलविस्तीर्णलवणिमनिधीमर्णवानिव परिसरानवलोकयाम्बभूव । तस्योदपानसलिलकुल्याभिराप्लावितस्य कोशलोपशल्यकस्योपवनानामन्यतमं प्रविश्य मुहूर्त्तमध्वश्रमापनयनाय विशश्राम ।

विश्रम्य पशुपाशेन मनुष्याणाम्, आलवालेन तरूणाम्, आवरणवप्रवलयेन वनानाम्, आलानशृङ्खलया गजानाम्, सेतुना सरिताम्, पट्टेन कूपानाम्, उष्णीषेण नरशिरसाम्, उन्मदकामिनीबाहुवेष्टनेन कामिकण्ठानाम्, अनुरागेण करणानाम्, कलत्रेण गृहिणाम्, बन्धमवलोकयन्नात्मना वीतबन्धो बीभत्समान इव कृच्छ्रेण नगरप्रवेशमरोचयदारण्यकः ।

ततस्तत्कालच्छिन्ननागदशनमुसलगर्भावदातैः, मन्दरमथ्यमानमुग्धदुग्धोदवेलोद्वेल्लदुल्लोलविपुलपरिणाहैः, प्रलयप्रगल्भमानपुष्करावर्त्तकप्रभृतिघनवर्गघर्घरनिर्घोषभीषणारवैः, सारवैरुत्खातकैलासशिखरतुङ्गैस्तरङ्गैः, सततमभिहन्यमानस्यापि निःस्पन्दस्य, पुरुषेणूत्तमेन केनापि नित्यमध्यासितमध्यस्य, परिखासलिलकैतवेनासन्ननिर्मुक्तनिर्मोकतया व्यक्तसुधालेपधावल्यस्य, नगरभवनप्राचीरवप्रवलयभुजगराजभोगकुण्डलस्य, विवृतवदनमुद्ग्रीवमिव फणामण्डलम्, उल्लङ्घितलोकत्रयमाक्रम्य वशीकृतस्य नभसो निवासाय दत्तावकाशतया स्फुटितमिव त्रिविक्रमोरुदण्डम्, अखिललोकसमवस्थानप्रवृत्तहिरण्यगर्भनखरमुखखण्डनविभक्तखण्डद्वयान्तरालविवृतरोदोविवरमिव ब्रह्माण्डगोलम्, ऊर्ध्वंधावदिक्ष्वाकुप्रतापविदीर्णमपव्यस्तपतितमिव जगद्गोलोपरिकपालम्, अर्णवविक्षोभपङ्कलेपमलिनमहावराहवपुस्सारूप्यप्रीत्या द्विगुणदृढवेष्टनेन गगनमालिङ्ग्य पीडयन्तमिवोद्गतमवनिवनिताबाहुबन्धम्, अन्योन्यसीमसंविभागकलहादुद्वृत्ता दश दिशो विनेतुमिव वशे स्थापयन्तमाशानां शासितारम्, अहोरात्रहिन्दोलाविष्कम्भस्तम्भयुगलमिव, रश्मिप्रेङ्खोलवशादजस्रमाकाशमार्गेण दूरमपसृत्य प्रत्यावर्तमानस्य विकर्तनस्य व्योमचत्वरे चमूरुलाञ्छन-

मयस्य क्रीडनकन्दुकस्य निर्गमणाय सान्तरालतया निखातमिव स्थूलोपलस्थूणाद्वयम्, अतिविपुलप्रवेशावकाशम्, अत्युन्नतायामपार्श्वशाखम्, अनवरतसंचरत्प्राणिचरणाभिघातक्षीणमसृणाधरीणशिलादारुम्, असितनागभोगपीवरकालायसटङ्ककीलनप्रत्युप्तसप्तधातुमयपट्टमसृणकर्कशेन बहुव्याममपरिमेयव्यासेन मुक्तार्गलेनापि नरशतप्रेरणीयेन विकटार्गलयोजनप्रयोजनेन्द्रबाहुदन्तुरोदरेण जनसम्बाधनोदनया निर्घातघोषघोरमारसता सागरसुतसहस्रखातविच्छिन्नभूखण्डयुगलविपुलेन नरहरिकरजकोटिपाटितहिरण्यकशिपुवक्षस्तटानुकारिणा, कुमारशक्तिपातावदारितक्रौञ्चवप्रतुङ्गेन, छायापथविभक्तवियद्विडम्बिना, शरभविषाणविशकलितादिशूकरशरीरसोदरेण, मगधराजदेहशकलद्वयमुपहसता कपाटयुगलेन परिगतम्, न केवलं नगरमेव, यावदखिलं महीवलयमपि करतलामलकवदवलोकयता, नगरप्रवेशिजनेङ्गितपरीक्षाविचक्षणेन, प्रवेशाय निर्गमाय च पथिकैरभ्यर्थ्यमानेन, बद्धाञ्जलेरूर्ध्वमुखमधोऽवस्थितस्य, नानाजनपदागतपथिकसंकथाकुशलस्य, परहृदयविदः, मृदुपूर्वाभिभाषिणः, व्यवहारकर्कशस्य, महतो जनसमाजस्य नायकेनाधिकारिपुरुषेणाधिष्ठितवलभीनिर्यूहम्, अनेकयोजनप्रेक्षणीयेन, पवमानघट्टनक्वणितकनककिङ्किणीकलरवमुखरशिखरेण, गगनवितायमानसितपताकेन ध्वजेन वर्द्धमानमूर्द्धानम्, ऊर्ध्ववातायनविवरवदनेन निपीय मन्दाकिनीसलिलेन सह दिग्गजानधो मदद्रवार्द्रद्विरज(द)व्याजेन निर्गमयन्तम्, उपरि रविरथयुग्यानामधो राजवाहनानां तुरगाणां निशातकालायसतर्कुकर्कशैरभिहन्यमानकांस्यटङ्कारमुखरमनुरणद्भिः खुरपुटैरुल्लिख्यमानकुट्टिमम्, उपरि नक्षत्रैरधो नरैरनेकविधाभिरुन्नमनावनमनोत्पतनप्रेरणप्रभृतिभिस्तनुभङ्गिभिरतिमहता प्रयत्नेन विलङ्घ्यमानम्, उपरि वैमानिकैरधो रथिभिर्निरुद्धनिर्गमत्वादाबद्धनिरन्तरचक्रवालतया व्योमवीरभद्रस्य डमरुमिव डामरकोलाहलध्वनिडम्बरम्, अम्बरमिव विस्तीर्णम्, अवनिपृष्ठमिव महापरिणाहम्, ईशानमिव सोमचुम्बितोत्तमाङ्गम्, अच्युतमिव लक्ष्मीनिवासम्, मायिनमिव जालमार्गैरुपेतम्, वासुदेवमिवालिङ्गितरेवतीपतिम्, रविपादमिव पीडितावनतकुवलयम्, गोपुराभोगमद्राक्षीत् ।

तस्य नारायणनाभिपुष्करस्येव निशि संघटितेन कपाटदलपुटेनोपेतस्य महतो गोपुरस्यावकाशेनान्तःप्रविश्य विश्वम्भरोदरपिण्डीकृतं त्रैलोक्यमुत्तरकोशलामिषेणावस्थितमाकलयाम्बभूव । तां च प्रस्थपादमष्टधा विभज्यैकमंशमशीत्या गुणयित्वा तेनैकभागेनातिथीनर्चयित्वा धनव्ययविषादमलिनमवस्थितैः, अखण्डस्य सभागस्य

च संकलनव्यवकलनभजनहननवर्गघनमूलगणननिपुणैर्ज्जातिचतुष्टयविज्ञैः, अङ्कपाशकुट्टकश्रेढीव्यवहारविद्भिः, त्रैराशिकसाप्तराशिकादिभिरुपपादितमस्खलितं कलाग्रहणमुपजीवद्भिः, हेमवर्णपरीक्षाविचक्षणैः, प्राणितदितरमूल्यकल्पनप्रवीणैः, विष्टिसंविद्विज्ञानविशुद्धैः, अन्याय्यपरस्वग्रहणादिव न्याय्यनिजधनविनियोगादपि पराङ्मुखैः, दारान् पुत्रमात्मानमतिथीनवसाद्यापि कायिककारकचक्रशिखावृद्धीनामल्पमप्यवसादमसहमानैः, त्रिकोणचतुरस्रार्द्धचन्द्रमण्डलसूचीसमविषमक्षितिक्षेत्राणां खातचितिफलाभिज्ञतया स्थपतीनपि विप्रलभमानैर्वणिग्भिरनुपदमुपचीयमानधनाम्, अश्वस्तनिकोञ्छशिलवृत्तिभिः, आवयःपूर्वार्द्धमुपचितब्रह्मचर्यैः, समावृत्तविद्याव्रतैः, आदारपरिग्रहादाहितावसथ्यैः, चतुर्वेदीविद्भिः, अङ्गविद्यानिबन्धप्रणेतृभिः, आन्वीक्षिकीकथाविशोधितधर्म्मकण्टकैः, मीमांसासंस्कारनिष्कलुषैः, उच्छन्नस्य प्रच्छन्नस्य वा संप्रदायस्यार्थमनुस्मरद्भिः, सुरासुरमुनिमनुजावदानप्रबन्धप्रणयनकविभिः, विभिन्ननिगमसेतुभिः, असकृदास्वादितसोमैः, अग्निष्टोमयाजिभिः, अश्वमेधराजसूयप्रभृतिषु क्रतुषु षोडशानामृत्विजामन्यतमैः, परिचितपरापरब्रह्मभिः, अजिह्मप्रकृतिभिर्ब्राह्मणैर्वर्ध्यमानब्रह्मवर्चसाम्, अरातिपृतनारेणुचयधुवनपवमानैररिकरिबलाहकघटाबन्धपाटनावग्रहैरभिजातैरवभृथाभिषेकपूतशिरोभिरशेषायस्कुशीविनियोगविशेषदर्शिभिरखिलकामिनीजनमनोहारिभिरिच्छानुरूपधनवदान्यैरवनिपतिनिर्देशवर्त्तिभिः शकुनिर्निर्विशेषमिक्ष्वाकुणा वर्द्धितैराजानुलम्बबाहुभिर्बाहुजकुमारैरुपजीव्यमानयुवराजाम्, व्याकोषकमलकुसुमनक्षत्रमण्डलमनोरमैः, उत्तुङ्गाद्रिशिखरपाटितव्योमखण्डैरिव भुवि निपतितैः, कुचकुम्भावष्टम्भप्लवमानकोशलकामिनीजनाङ्गरागापकर्षणकिर्मीरतरङ्गैः, इन्द्रचापलाञ्छितैरिव जलदच्छेदैः, उपकूलपांशुक्रीडनकुतुकतरलकुमारीकरसंचीयमानकुमुदकाननपरागैः, उन्मदमरालकुलकोलाहलान्तरिततीरसंचरमाणरमणीमणिमञ्जीरशिञ्जितैः, जलयन्त्रोच्छलितसलिलासारश्लीकरैरुपकृतप्रत्युपकृतकृतज्ञतया दिवमभिवर्षद्भिः, स्फटिकशिलासोपानवलयितेन्द्रनीलमणिनीलामलजलैः, नीललोहितबाहुदशकवेष्टनालिङ्गितकालिकाकलेवरानुकारिभिः, अवनिभर्तुर्मानवस्य बाहुमवलम्ब्य पुलकितायाः सात्त्विकस्वेदबिन्दुभिरिव भगवत्या भुवस्तुषारसलिलसंपर्ककण्टकितविग्रहाभिराकण्ठमग्नाभिः कमलिनीभिरिव नागरीभिर्विलोभिततरुणमधुकरैः, वधूकरलूनकुवलयवलयनालदन्तुरैः, निरन्तरकादम्बकदम्बरसितसरसैः ससारसैः सरोभिरभिरामाम्, अनवरतारब्धमङ्गलसंगीतकमुखरमृदङ्गमन्द्रध्वनिपरिपूरितनिकुञ्जैः, उद्धूयमानमकरध्वजपूजाध्वजावसक्तरक्तपटतरङ्गितगगनपथैः, सततमेव सान्ध्यरागच्छुरितवलाहकावलीवेल्लनं विडम्बयद्भिः, यन्त्रावकृष्टेन प्रतिभित्तिविवरवर्त्मगुलुगुलितमध्यमानतक्रकलशगम्भीरध्वनिना तिर्य्यग्विन्यस्तमुरकृतकुम्भमुखादुद्गत्य

धवलोपलशकलकल्पितां कुल्यामाक्रामता, राहुवदनान्निःसृत्य कुमुद-खण्डानि प्रसादयतेव चन्द्रालोकेन, वज्रमणिघटनोज्वलसारणीसरणिभिरुपेत्य वल-भीषु विरोपितं दमनकामनं वर्द्धयता, सुधाकरकरदण्डोपनीतेन सागरमुच्छ्वास-यतेवामृतेन मूखा(षा)मुखन्यस्तमाणिक्यशङ्खवर्त्तेषु शिथिलवेगेन जर्जरीभूय पवनपथमवगाहमानेन वातायनविवरविनिर्गतागुरुधूमधाराधाराधरैरर्द्धमार्गे प्रति-गृह्याभिवृष्टेन सारवेण नीरेणान्तर्बहिश्च द्विगुणितसुधालेपधवलिमभिः सौधै-र्निरन्तराम्, अभ्रकभित्तिवृतिषु प्रतिबिम्बसंक्रान्तानामवनिरुहां प्रसूनलवनाय व्यापारितेषु प्रतिहतव्यथितेषु पाणिपल्लवेषु गृहीत्वा प्रियतमैरुपहसिताभि-र्विविक्तायामपि माधवीमण्डपमूलमणिवेदावासन्नरत्नविष्कम्भदण्डप्रति-फलितनिजप्रतिमासमाजलज्जया दयितप्रसभकण्ठग्रहमाक्षिपन्तीभिर्वनलता-शङ्कया मधुकरैरनुवध्यमानवदनारविन्दपरिमलाभिर्मुग्धवधूभिर्मदिरागण्डूष-सेकेन द्विगुणसुरभीक्रियमाणकर्पूररेणुपरिकल्पितबकुलद्रुमालवालैः, कोकनद-कलिकानुकारिप्रवालमणियन्त्रमुखोद्गीर्णपवनपथजर्जरितपल्वलजलधारान्ध - कारितैः, सन्ध्यानिष्ठचूतनीहारशीकरसंकुलैरिवाकाशशकलैः, उन्मदकोकिल-कलक्वणितमयैरिव, कलहंसकलकलोपकल्पितैरिव, भ्रमरपुञ्जगुञ्जितारब्धैरिव, मधुमासनिवासभवनैरिव, मदनमदविनोदायतनैरिव, निष्कुटैरशून्यवेश्म-प्राग्भाराम्, चन्द्ररुचेव बहुलक्षपापोदितया, मधुमदश्रियेव नित्यमलिनाम्बरेषु कृतपदया, शकटाक्षरक्षजनतयेव रजोमलीमसमनसां पन्थानमनुसरन्त्या, प्रावृड्वीथ्येव शिथिलीकृतसर्वाक्षमूढगुरुभारमनोरथनिकायं व्यवसायवन्ध्यतां नयन्त्या, कामिन्येव प्रकाममदनाभिलाषदुःस्थजनसंश्रितया, नवग्रहवडवयेव दुःखलीनदीनवदनया, मृगयाटव्येव बलवत्तरक्षुधावित्ततया, वेगविद्रुतसत्त्वया, प्रकृतिकुटिलराजपादपरिचरणोपघ्नशिरसा, जातिमप्यपहाय कनकमेव प्रार्थ-यमानेन, कपर्दमपि मूर्द्ध्ना प्रतिगृह्णता, बान्धवावमतकलत्रदुःस्थतया दक्ष-समाजस्थितस्य मित्रस्यापि लोचनविषयमसहमानेन, मृगव्याधचरितविडम्ब-नयापि निरवलम्बे वृत्तिमिच्छता, दिगम्बरेण पशुपतिनाऽन्येनापि तदनुगामिना जनेनाकिञ्चनेन ध्रियमाणया दरिद्रतया दूरपरिहृताभिरापणपरिपूरणोद्धृत-पण्याभिर्विपणिभिरुपेतां नगरीमयोध्यां प्रविवेश। यस्यामद्यापि नरपतिप्रासाद-वलभीवातायनवि(नि)षण्णाभिर्दशरथमहिषीभिरानन्दबाष्पोदयपतनान्तराले वत्सलविवशमवलोकितानि चतुर्णां राघवकुमाराणामिषुविक्षेपशिक्षा-कौशलानि सूचयन्त्याक्रीडभूमिषु प्रतिदिशविवृतविवरावलिजर्जराः शरट-नखाकृष्यमाणबाणखण्डाः, मूषकमुखखण्डितोत्कीर्णकनकनाराचरेणुकर्बुरा मूर्द्ध-प्ररूढतरुजटाभारवाहिनः, रामविरहविधुरतया गृहीतव्रता इव मृदां कूटाः।

साम्प्रतमपि यस्यामवलुलितकाकपक्षमनोरमाननलिनयोर्भगवतो गाधिनन्दनस्योभयावकाशवितताबाहुतर्जनीयुगलमवलम्ब्य व्रजतोरपूर्वविषयावलोकनकुतुकतरललोचनयोरनपेक्षितप्रस्तावमधुरमुग्धकलजल्पितयोरगणितजननी-वियोगबाधमनभिलषितधात्रीस्तन्यरसमचिरोपचितकौशिकपरिचयविश्रब्धम-काण्डे प्रवसतोर्दशरथकुमारयोर्विरहविधुराणामतिकरुणमाक्रोशतां पौराणामनुगायन्ति पुराणपुरन्ध्रयो गाथानिबद्धानि विलपितानि ।

यस्यामिदानीमपि जीर्णदेवकुलविटङ्कवासिभिर्ज्जर्जरितपक्षपक्ष्मभिर्ज्जरदुलूकलोकैरनूदितमुलूलूकलकलमाकर्ण (यन्ति लोकाः)। (तत्र च की)टगर्भजरठकाष्ठकुट्टाकविष्किरत्रोटिकोटिष(स्त)नितसुष्ठुभिरयोघनाभिहन्यमानरीतिटङ्कारैः संकुलानि, क्वापि वात्याविवर्त्तितकनककेतकीकुसुमदलवलयविगलितैरिव परागैरुन्मृज्यमानहिरण्यकलशक्षोदरेणुभिरुपच्छुरितानि लोहजातापणपदानि समाससाद। तत्र तेषामवलोक्य कनककलशानां निर्म्माणपरिकर्म्मविधिमचिन्तयत्। क्षुद्रत्वमप्यमीषां हिरण्रजसां नापलपति गौरवम् ।

तथाहि—कोशलकामिनीकलेवरकान्तिविजितैरमीभिरपत्रपयेव द्रवीभवद्भिरसकृदनलं प्रविश्य साधित एव वर्णोत्कर्षः सुवर्णचूर्णैः, अपनीतमेव क्षुद्रतया सह ज्ञातेयव्यवकलनम्, इदमेव केवलममीषामन्तर्वृत्तिशून्यतायां परिणमते, यदमूनि कनकरजांसि कलशीभावमुपेत्याप्यलब्धायोध्यकवधूपयोधरोत्सेधसाधर्म्याणि मृषैव शाणशूलप्रोतमात्मानमनवरतभ्रमणिकासहस्रेणोन्मृजा कृशिम्ना चावसादयन्ति। किन्न पश्यन्त्येवमेव प्रतिमासमर्कार्चिषि प्रविश्य द्रवीभूतः क्रमेण निर्गत्य पूर्णमण्डलतामुपगतः पुनरप्यासामुत्तरकोशलाकुशेशयदृशामाननोपमानमलभमानो गगनगोलप्रोतमेरुशिखरसूचिमभितः कालकारुणा रश्मिषु गृहीत्वा भ्रमितोऽपि बहुलपक्ष(क्ष)पातकुट्टङ्कतक्षणक्षपितसर्वावयवोऽपि क्षपाकरः किमुपलभते साहसव्यवसायफलं प्रत्युत हरिणेनाक्रान्तहृदयः पशुपालतां भजते। अथवा बहूपकरोत्यमीषां कलधौतकलशानामेवंविधं शरीरावसादनव्रतं यदनेनैव वपुषा दिवमारोहन्ति, सुरालयोपरि न्यक्कृतत्रैलोक्यमवतिष्ठन्ते, जनयन्ति जनानामपरध्यं वधियमिति चिन्तयित्वा जनसंबाधप्रेरणापरतन्त्रः पदं पदमग्रतो गच्छन्नायताभिश्चतुर्द्धा प्रसृताभिरभिनवसुधालेपधवलाभिर्वसुधाविदारणनिर्घोषभीषणोत्तालकोलाहलाभिर्दिवमारोहतां सोपानभूतैः सौधतरङ्गैरुच्छ्वसितोभयतटाभिर्वीथिभिराक्रान्तचतुर्दिगवकाशं परिवहत्प्रवाहमिव भगीरथावतारितगङ्गाविवर्त्तम्, आदिगन्तप्रसारितचरणचतुष्टयोपष्टब्धमिव कूर्म्मराजपृष्ठचक्रम्, उत्सर्पिचतुर्दन्तिकान्तरालकुण्डलितमिवैरावणशुण्डारदण्डम्, आशामुखविकीर्णदीर्घकल्लोलरेखाभिरवलम्बितमिव मन्दरावर्त्तन-

प्रकटोपलक्ष्यमाणमणिगणं क्षीरोदसागरगर्भम्, अवनिमवदातदीर्घैरवष्टभ्य दोर्भिश्चतुर्भिरधोभुवनविवरादुद्गच्छतो नागपतेरनन्तस्य विविधरत्नावलिवद्योतितं फणामण्डलमिव मनुवंशवर्द्धनभुजाभोगनिर्भरभ्रियमाणभूवलयभारविगमादुच्छ्रितम्, इक्ष्वाकुवशंवदाभिश्चतसृभिरावद्धकलकलमुखरमुखीभिराशाभिराकृष्यमाणसितसूत्रवरत्रमिव रसातलादुद्ध्रियमाणस्य नागलोकमणिकोषस्य संचयम्, दिगन्तलङ्घनजाङ्घिकैर्धवलकञ्चुकपरिच्छिन्नकलेवरतया नागमल्लस्य विपुलमायामुपहसद्भिर्यशोराजपुरुषैः पृष्ठतः प्रेरितानामननुभूतचरशासनोद्भूतभयपाण्डुराणामन्योन्यकण्ठग्रहनिरन्तरसमवेतानामपहाय दिक्पतीनेकपदे पिण्डीभूय राजशरणमनुप्रपण्णा(न्ना)नामिव हरिदङ्गनानां संघातचक्रवालम्, आकरमिव रत्नानाम्, अतिविततमपि नरसंमर्द्दादनवकाशम्, उद्बाहुपुरुषप्राप्यनिषद्यानिषण्णैरकुप्यवसुव्यवहारिभिर्वणिग्भिरुपेतं विपणिमूलचतुष्कमविशत्। तस्मादुपकारिकागामिना वर्त्मना राजकुलमाससाद।

तस्मिन्नुपकपाटपुरुषार्द्धदघ्नसुधावेदिकल्पितकोमलासननिषण्णेन, प्रवेशाभिलाषिनानादिगन्तागतत(न)रपतिसहस्रोपायनीकृतरत्नोच्चयार्चितचरणेन, बद्धाञ्जलिजनतानिरीक्षितभ्रूभङ्गितरङ्गितेन, कपिलकटाक्षपातविद्रुतापसरज्जानपदजनेन, करे गृहीत्वा निर्गमयैकाकिनमवन्तीशासितारम्, एनमपि प्रापयानुचरसमाजमायासविवशं पञ्चालपृथिवीपालम्, अवलम्बस्व सोपानस्खलितपादं पतन्तमङ्गावनीभुजङ्गम्, अभिवन्दस्व युवराजशकुनिप्रियसखं विदेहराजकुमारम्, अङ्गुलिविभीषिकया तर्ज्जय विकृतमुत्पत्य धावतो वङ्गमृगान्, निवारय रोमकपतिना कलहायमानान् पारसीकान्, उत्सारय मार्गावरोधिनः किंपुरुषान्, आधेहि कुरुवर्षसिद्धानां गमनावकाशम्, अनवसरं बोधयित्वा निवर्तय व्यतीत्य सेवासमुचितं कालमुपगतानैलावृतान्, विश्रामय द्वीपान्तरागतानवनिपतीन्, अतीतः प्रभुपादोपासनसमयः, अधुनैव विहायास्थानमन्तःपुरं प्रविशति विशांपतिरिति परिजनान् व्यापारयता दौवारिकप्रधानपुरुषेण पाणिनावलम्ब्य वितताननन्तसामन्तशतकिरीटकोटिमणिशिलासंघट्टजर्जरिताग्रां वेत्रलतां केनाप्यवारितो मुनिरतिक्रमाप्रथमकक्षामुल्ललङ्घे, ततः कतिपयैरेव राजभिरिक्ष्वाकुसिंहासनबद्धदृष्टिभिरनिशोपासनवद्धव्रतैरध्यास्यमानमपि रत्नस्तम्भसहस्रसंक्रान्ताभिः प्रतिमाभिर्लोकसंकुलमिवोपलभ्यमानमास्थानमपहायावरोधगामिनं पन्थानमारुह्यान्तःपुराभ्याससीमानमाससाद।

तत्र निशान्तकक्षाया दक्षिणां द्वारशाखामवलम्ब्य स्थितेन करयुगलगृहीतकनकयष्टिविन्यस्तचिबुकेन, धवलोष्णीषपट्टसूत्रप्रालम्बैरिव पलितोज्ज्वलकूर्च्चकचनिचयैस्तिरोहिताननेन, मूर्त्तिमतेव देवीशासनेन जरत्कञ्चुकिनाऽनुशास्यमानानवनिपतीन्, अनल्पेन प्रसादेन सत्क्रियमाणानुपनीतोपायनानितरद्वीपनरपतिदूतान्, अभयेन योज्यमानानरीनपि शरणागतान्, उत्साहेन वर्द्धमानानभ्यमित्रीणसेनापतीन्, अन्तः प्रवेश्यमानाः सखीभावेन समवेतुमागता दिक्पालगृहिणीः, अवसितमाकर्ण्यमानानि द्विजानामग्रहारभुजामाशीर्वचनानि, प्रहीयमाणानि युवराजशकुनिसहचराणां मूर्द्धाभिषिक्तकुमाराणामनेकविधान्यग्राशनानि, प्रतिगृह्यमाणानि सिद्धकापालिकीजनसिद्धाञ्जनानि, कुमारशकुनेः परिणयविलम्बकारणमनयुज्यमानानङ्कविद्याविदः सिद्धादेशानपश्यत् ।

ततस्तेन कञ्चुकिना प्रणिपत्येत इत इति दर्शिताध्वा व्यतीत्य कक्षान्तराणि, सौभाग्यसिन्दूररेखयाऽलङ्कृतेन नि(ति)लतण्डुलितेन कुन्तलपाशेन निर्धौतदिग्गजकुम्भधातुरागारुणैकतमतरङ्गसंगतकुवलयपुण्डरीकखण्डमण्डितां मन्दाकिनीं बिसतन्तुसन्तानशबलशैवललतान्तरालप्ररूढरक्तोत्पलनालललितां च नलिनीमुपहसन्त्या, पलितोज्ज्वलकर्णोपकण्ठालकशङ्कां जनयद्भिरवतंसमणिकिरणशलाकाकदम्बैरपह्नुतकपोलवलिभङ्गया, चन्द्रिकाच्छुरिततरङ्गच्छेदसंगतयेव गङ्गया, किञ्चिदवनतभ्रूतिरोहितप्रान्तेन निजदयिताभिमुखमेव वलमानेन विषयान्तरमन्तरा स्पृष्ट्वापि निमिषमप्यन(व)स्थितेन पतनोन्मुखप्रपातेनेव पुण्यसरित्स्रोतसा दीर्घेण लोचनयुगलेन भुवनानि पावयन्त्या, स्फुरदाप्रपदीनैकावलीमौक्तिकविन्दुवर्षिणा मेखलाविलम्बिना पयोधरभारेण महागिरितटीनामनुकारिण्या, मूर्त्तिमत्येव पतिव्रताधिष्ठातृदेवतया, शरीरिण्येव शीलसंपदा, गृहीतविग्रहयेव सर्वभूतानुकम्पया, प्रतिपन्नकलेवरयेवोदारतया, महिष्याऽपि शकुनिजनन्या, सामविदुपदिष्टदानव्रतैकवृत्त्यापि प्रसूतदण्डया, प्रथमोदितसुशर्मणापि चरमजनितसुशर्मणा, निजप्रतिरूपाभिरखिलराजकुलव्यवहारविदुषीभिराजन्मनः परिचिताभिरितिहासकथाकुशलाभिः सैरन्ध्रीकर्म्मशिक्षणोपाध्यायाभिर्वृद्धाभिः सहचरीभिरुपास्यमानया देव्या शैव्यया सविनयमध्यासितविपुलासनार्द्धम्, उमासहचरमिव गिरीशम्, अवदातपक्षविभावरीविशदपार्श्वमिव रत्नसानुम्, आजानुलम्बपीवरेण सुरासुरसमरसंघट्टघनघटाविघटनावग्रहेण, भूभारवहनवहिङ्गिकादण्डेन, कोदण्डकुण्डलनपरिधिमध्योदितदीर्घदानवकुलोत्पातकेतुना, वैरिविद्रुतमघवभयघर्मप-

हारणच्छायातरुणा, तरणिवंशमण्डपावलम्बस्तम्भेन, जम्भरिपुसंपल्लता-विष्कम्भदारुणा, रिपुवीरवारणकटतटकटाहांवदारणदारुणेन, रणधरणिरेणु-धोरणिच्छुरणविच्छिन्नघनीभवदसृग्धारोच्छूनकठिनानि राजलक्ष्मीसौभाग्य-सिन्दूरविन्दूनामनकारीणि, गीर्वाणविद्रावणोद्रिक्तदनुनन्दनबाणव्रणकिण-चिह्नानि विभ्रता, सान्ध्यरागारुणनक्षत्रसंकुलच्छायापथसच्छविना, कमठ-पृष्ठनिष्ठुरांसपीठष्ट (स्त) नितविस्खलितदितिजपरिघमुखोल्लेखलक्ष्मभिर्जय-लक्ष्मीसीमन्तपद्धतिभिरिव लाञ्छितशिखरेण केशग्राहनिगृहीता-सुरपुरश्रीशेखरारुणशिलाशोचिषेव शोणीकृतकरतलेन, दानोदकार्द्र-तया विकटकण्टकदुर्ग्रहदण्डानामखण्डबीजकोषाणामकलुषतरवारिधारापरि-पालितानां विद्विष्टराजमण्डलपद्मानामन्योन्यशिलीमुखोत्पतनरणितमुखरेण समुद्धरणेन च, मत्तवारणकरकार्कश्यमनुशीलयता लीलया तृणलघोरवनि-भारस्योद्वहनेन, सततमच्युतलक्ष्मीनिवासचुञ्चुनाऽऽभोगेन च भुजगभर्त्तार-मनुहरता, दीनजनदारिद्रचदावपावकबलाहकेनेव जीवनतर्पितप्रजेन, मेरुणेव कनककटककोटिपाटिताम्वरेण, मथ्यमानसागरेणेव रत्नप्रत्युप्तविवर्तितोर्मिकेण, दिव्यगणिकाजनेनेव रक्तलेखोत्करावलम्बितपाणिना, नगरेणेव शालोत्तुङ्गेन, मण्डपद्वारेणेव सर्वतोरणोत्सर्पणविशालदारुणाचरितेन, न केवलं वक्षःकपाटस्य यावदविनयस्याप्यर्गलेन बाहुयुगलेन परिरभ्य राजानं सुरथमनेकविधाभि-रनुभूतपूर्वावदानशतसंवद्धाभिरायतितदात्वोचितोपदेशसारभूताभिः कथाभि-रनुशासत्तं केशेषु गृहीत्वा नृशंसतामिव त्याजयन्त्या, वदनचन्द्रस्य कूर्च्चकच-कलङ्कपङ्कमिव क्षालयन्त्या, पलितश्रिया धवलमौलिम्, उत्सर्पितुषारसंघात-स्थगितकूटमिव गौरीगुरुं गिरिम्, अधो विलम्वमानस्य विपरीतपरिवर्त्तित-स्यापि प्रकृतिसिद्धां कुटिलतामत्यजतो भ्रूधनुषो गुणैरिव ललाटवलिभङ्गैः, साचिविस्खलिततरङ्गलेखैस्त्रिस्रोतसः स्रोतोभिरलङ्कृतशिखरशिलाफलकमिव कनकशिखरिणम्, विश्रान्तपञ्चशरशरासनगुणटङ्कारकेकाकलकलेन चिकुर-कादम्विनीकालिमापहरणशरदागमेन श्यामलतिलबिन्दुव्रजविकिरणेन शरीर-भुवं पावयता, करणहरिणतारल्यपरिहारवागुरागुणानिव वलिदामानि वितन्वता, करुणयेव शिथिलिततनुसन्धिवन्धेन, यन्त्रावकृष्टकनकसूत्रमिव, विवराभिमुखं भुजगमिव, द्वैपायनकाव्यमिव वक्रिमाणमपहाय सरलतामु-पेतमपि परहृदयप्रवेशसमर्थं लोचनयुगलं वहिरर्थात्क्रमेणाकृष्यान्तर्मुखतया परत्र लोके व्यापारयता, पाखण्डपथेनेव श्रुतिवलहारिणा, केदारपालविद्रुतहरि-णेनेव मधुरसस्यास्वादनाद्विरतमनसा, श्रान्तपथिकेनेव कान्तारतरणभीतिमुद्भा-वयता, प्रत्यूषसेव तारकाणां मसृणतामपहरता, रावणेनेव विद्विष्टरामेण, हनुमते-

वाक्षशक्तिध्वंसनेन, दाशरथिनेव प्रशमितखरदूषणेन, चरमेण वयसा कञ्चुकिनेव नित्यमुपसेव्यमानम्, उत्तुङ्गवृषीनिषण्णेन मूर्तिमत्पतिव्रतदेवतया भगवत्याऽरुन्धत्या परिचरितपादेन प्रजापतिना मित्रावरुणवंशवर्द्धनेन मुनिनोपदिश्यमानब्रह्मविद्यासारम्, युवराजेन शकुनिना संवाह्यमानचरणम्, उपाध्यायकुलादचिरागतेन नातिदूरावस्थितेन कुमारदण्डेनाभिधीयमानगोतमाश्रमवृत्तान्तम्, अभ्यर्णवर्त्तिना कणादमुनेः सकाशादधिगतसरहस्यवैशेषिकदर्शनेन समावर्त्य विद्याव्रतमागतेन कुमारसुशर्म्मणा सविनयमवनिपतेरिन्द्रद्युम्नस्याकाण्डे प्रभूतमुन्मादोदन्तमावेदयता प्रनष्टसुरथलाभहर्षधाराविच्छेदान्तराले विरोप्यमाणशोकाङ्कुरम्, कथय किं कणादाश्रममधिवसति? किमन्यत्र गतः? किं व्यवस्यति वत्सः शाकलशासितेति मुहुर्मुहुः सुशर्म्माणमनुपृच्छन्तं पुराणंराजर्षिमिक्ष्वाकुमद्राक्षीत् ।

अथ दूरादेव दृष्ट्वा ससंभ्रममुत्थाय परिजनहस्तावलम्बानपेक्षमभ्युद्गत्य गृहीतपादेन सधर्म्मदारेण राजर्षिणा मानवेन विदर्भाधिपतिना सुरथेन, युवराजेन शकुनिना, कुमाराभ्यामपराभ्यां वशिष्ठनिर्विशेषमभिवादितः, भगवता चिरविरहकातरेण ब्रह्मयोनिना सुतनिर्विशेषमालिङ्ग्य प्रतिगृहीताभिवादनः, देव्या शैव्यया स्वयमेवोपनीते पराध्यासने मुहूर्त्तमासाम्बभूवे। तमुपनीतार्घमात्मकरगृहीतव्यजनवातवीताध्वक्लममातिथेयेन विधिना परिचचार राजर्षिरिक्ष्वाकुः। कतिपयसमयविश्रान्तं पप्रच्छ युवराजः शकुनिः—तात! तपोनिधे! कथय कुशलिनं प्रियसखं जाबालिमिति।

तस्य प्रश्नवचसः किमप्युत्तरमप्रतिपद्यमाने बाष्पबिन्दुविलुलितलोचने दीर्घं (निः)श्वसति मुनावृतध्वजे दूरादेवावनम्य दौवारिकी व्यजिज्ञपयत्—देव! द्वारि स्थिता कापि विद्याधरदारिका निवेदयति—द्रष्टुमिच्छामि विपन्नाभ्युपपत्तिनिमित्तमवनिनाथस्य मानवस्य पादमूलमिति, प्रवेशने निर्गमणे(ने) च देवः प्रमाणमिति। अथ प्रवेश्यतामित्यादिदेश तामुर्वीपतिः। आदेशसमनन्तरमेव त्वरितं निर्गत्य प्रत्यावृत्तया तया वामकरगृहीतमण्डलाग्रदण्डावसक्तस्कन्धया निक(ष्क)निष्ठमुष्टेर्दक्षिणकरस्य वेत्रवल्लिसंयमनसंकुचितेतराङ्गुलेः कनिष्ठयैव केवलया निर्दिश्यमानवर्त्मा प्रविश्य तं तथाविधं ब्रह्मक्षत्रसमाजमम्बिकाजनसुलभेन साध्वसेन गृहीता काऽस्मि? कस्मादागताऽस्मि? कुत्र तिष्ठामि? कीदृशोऽयं नरसमाज इति सर्वमेव विसस्मार। न च प्रत्यपद्यत दौवारिकीभ्रूसंज्ञया प्रेरिताऽपि निजकर्त्तव्यम्। अपमुषितहृदयेव वीतप्राणेव व्रीडाभयव्यतिकरस्तम्भिता लिखितेव निःस्पन्द-

मवर्त्तत विद्याधरकुमारी। तामपूर्वं राजद्विजसमाजावलोकनसाध्वसवशंवदामवलोक्य केनाप्यान्तरेण निमित्तेन वर्द्धमानस्य प्रकृतिसिद्धस्य वत्सलभावस्य वेगं संवरीतुमसमर्था वलादुत्सङ्गे निवेशयामास, कराङ्गुलिकिसलयाग्रेणालिकफलकलुलितामलकलतां परिमार्जयाम्वभूव, सिचयाञ्चलेनापमृज्य नयनोप(द)विन्दुमाश्वसिहीति (श)नैराशशस, ततो मधुरमिदममन्त्रयद्देवी शैव्या–

कल्याणिनि! कल्प(न्य)के! काऽसि? कस्यासि? कथमेकाकिनी राजकुलमागताऽसि? कस्य हेतोः प्रकाममलिनमम्वरमवलम्ब्य कादम्विनीव क्वाप्यनवस्थिता दिगन्तरेषु भ्रमसि? कुतः कारणाच्चिरमृदितपत्रभङ्गिधूसरकपोलविलुलिताश्रुधारम्, अपगतकर्णपूरविवृतश्रवणविवरवर्त्मना प्रविश्य मानसं मलिनयता वाष्पसलिलधौतकज्जललेखाद्रवेण निश्शेषत्यक्तनयननलिनम्, उपचितरजःपङ्क्तिरोहितभ्रूयुगलविच्छेदम्, आयतोष्णश्वासपरिमर्षम्लानरागाधरकिसलयम्, अपेतमङ्गलतिलकालङ्कारविकलललाटतटतुलितरोहिणीवियुक्तशशधरशकलम्, अहर्मुखहिममयूखबिम्वसंवादि, दिवसापगमसमयमुद्रितारविन्दसोदरद्युति तव वदनम्? अयि! केन नृशंसप्रकृतिना हताशेन शिरीषमृदुलमूर्त्तिरनपराधमधुरमुग्धवया न वयसः, न सौभगस्य, न शीलस्य, नाभिजातेरुचितमिदं व्यसनमिवानुप्रापिताऽसि? हा! कथमकरुणेन पित्रा परित्यक्ता भुवमटसि? हन्त! कथं जीवति त्वया विना तव जननी? त्यज विषादम्, आसादितमवेहि व्यसनावसानम्, अभिधेहि विश्रम्भादखिलमात्मनश्चरितमिति करुणासरित्तरङ्गवेल्लनध्वनीनिवेक्ष्वाकुमहिषीवचनानि निशामयन्ती दीर्घावगुण्ठनवसनावृतवदनैव देवयोनिकन्यका शनैर्निजगाद–

देवि! सकलविद्याधरकुलचक्रवर्त्तिनः पारियात्रपर्वतप्रवरशक्रस्य विक्रमाक्रान्तनिखिलदेवयोनिजनस्य पाकशासनप्रियपरिजनस्य कुबेरानुचराणां प्रथमस्य सुगृहीतनाम्नो हिरण्यकेशिनो गुह्यकस्य दुहितरि काममालायामवरोधप्रधानमहिष्यामुत्पन्नाहमेकैव दुहिता मन्दारिका नाम। तामिमामाजन्मनः प्रियसखीपदेनानुजग्राह विश्वकर्म्मनन्दना चित्राङ्गदा। विबुधवार्द्धकिगृहिणी चित्ररथस्य गन्धर्वपतेरात्मजानुसूया चित्राङ्गदेति मन्दारिकेति पदद्वयमपि पर्यायमिवागणयत्। एकदा शौनकाध्वराहूते पितरि विबुधवार्द्धकौ नैमिषं व्रजति मध्यमलोकावलोकनकुतूहलिनी चित्राङ्गदा पित्रा सह भुवमवरोढुमभिन्यविशत। दुर्निवारमेनमभिनिवेशमस्याः प्रशमयितुमनसूया दुहितरमनुशशास–

पुत्रि! चित्राङ्गदे! विप्रलम्भबहुला मध्यमंभुवनभूमयः, यत्र विविध-व्याधिदुःस्थितावस्थानां पदे पदे विपदो दृश्यमाना अपि खेदयन्ति दयावतो दिव्यलोकवासिनः। तत्र किमिव चित्रमालोकयिष्यसि, विरम दुर्व्यवसायात्, अचिरात्प्रतिनिर्वर्त्तिष्यमाणमवगत्य पितरम्, इहैव भवनोप(व)नसीमनि गमय कतिपयान्निमेषान्, अमुष्य निरन्तरनिलीनभ्रमरनिकुरम्बावरण-निवारितप्रसरपिण्डितपरिमलस्य माधवीमण्डपस्य तले मन्दारिकया सह कनककेतकीपरागपांशुक्रीडितेन विनोदय हृदयम्, अस्य बकुलपादपस्य मूले संक्रामय सीधुगण्डूषसेकम्, इह हि न चिरमवतिष्ठते घनसाररेणु-सिकतालवालेषु विलीयमानो दिवसान्तरमैरेयरसः, पश्यायमशोक-किशोरकस्तव चरणतामरसस्य स्पर्शसुकण्टकित इव गूढकोरकानुद्वहति किसलयनिर्गमग्रन्थीन्, न तावदुद्गिरति विटपिविटः शुकशिशुतुण्डकोमलाः कलिकाः, तमेनमनुशाधि, प्रहर चरणेन धूर्त्तम्, अयि! सुचरितैकशीले! परिहर कुङ्कुमोदकुल्याभिमुखानुसरणव्यसनम्, एतानि त्वदाननेन्दुद्युति-विघटितानि सीदन्ति कोकमिथुनानि, नर्त्तय करतालेन धारासदनवासिनो मयूरान्, उपदिश गतेषु विशेषममीषामुन्मिषितोद्यानदीर्घिकाकमलवन-वासिनां कलहंसानाम्, अवचिनु नागलतालिङ्गनन्यञ्चितवपुषां प्रसवमञ्जरी-भारभङ्गुरशिखराणां पूगपादपानामासच(व)परिपाकसुरभीणि शकुनि-चञ्चूपुटविलुञ्चितत्वञ्चि कषायमधुरमादनानि फलानि, विहर मधुकर-निकरानुबध्यमानवदनपरिमला पल्वलेषु, नूनमेवंविधविविधबालकेलिव्या-सङ्गादपस्मृत्य निमिषनैमिषप्रवासिनो निजपितुर्विरहमिहैव गमय समयम्। अथवा हताशेन मुनिना शौनकेनाहूतेषु पतिषु विरहबाधाविधुराणामद्य नयनमनोविनोदनाय नन्दनोद्यानदीर्घिकातीरे समवेत्य नानाविधा वचन-तनुभङ्गीरभिनेष्यताममरदाराणामवलोकय बालतया बलवतो मन्मथो-न्माथव्यथाविकारस्यानुपज्ञा किमिदमिति विस्मिता च कुतूहलचञ्चला च कुसुमचापचापलचेष्टासंगीतकानि। किं न जानास्यद्य देव्या पुलोमनन्दनया वितायमाने कुमारजयन्तजन्मदिवसरक्षामङ्गलग्रन्थिवर्द्धनमहोत्सवे दौवारिकै-रनिवारितप्रवेशास्त्रिदशकुशेशयदृशो मृकण्डुतनुजपूजावैजयन्तीतरङ्गित-गगनपथमारुह्य वैजयन्तप्रासादशिखरमवलोकयिष्यन्ति वलभीवातायन-विवरावलम्बितवदना निजनिजदयितविमानावतरणवर्त्म। तदेहि, तत्र स्थिता किमेकमवनिवलयमखिलमेव त्रैलोक्यमासन्नमिव निभालयिष्य-सीत्येवंविधैर्बहुभिरुपदेशैर्यदा न शशाक चित्राङ्गदामभिमतात् प्रतिकूल-यितुम्, तदा तदनुगमनाय मां च चित्राङ्गदतनयां च मन्दोदरीं न्ययोजयत्।

प्रियसखी चित्राङ्गदा तु नैमिषमागत्य तत्र सुरथस्वयंग्राहकुपिततातोत्सृष्टशापवशादावाभ्यां व्ययुज्यत। तां विचेतुमेक (तो) मन्दोदरी, परतश्चाहमभ्रमम् । कतिपयैरहोभिरदितिवनपरिसरसरस्वतीतीरबीजपूरतरोरधस्तया सह समगच्छे। तदीयं प्राणपरित्यागव्यवसायमधिगत्य मूढाऽहमतिचिरेण चेतनामधिगत्य न तत्र चित्राङ्गदामद्राक्षम्, अपि तु वेगविरहपदपातामाबीजपूरप्रकाण्डमुपलब्धामपरतो विलीनामस्याः सैकतेषु पदवीमेव केवलमवालोकयम्। अनन्तरमपेतप्रत्याशया दृशा दिशो दश शून्या इव पश्यन्ती किमपि शरणमप्रतिपद्यमाना करुणमतितारं च व्यलपम्—हा! हन्त! महतीयमनर्थपरम्परा तस्य कोपनस्य शापेन प्रसुषुवे, विदर्भया सुरथः, सुरथेन सखीप्राणाः, प्राणैश्चित्राङ्गदा, चित्राङ्गदया मन्दोदरी, मन्दोदर्या वन्धवः, वन्धुभिः सुखम्, सुखेन मन्दारिका, मन्दारिकया संसारफलं व्ययुज्यत। हा! प्रियसखि! सहचरीजनहृदयभवनविद्योतिनि! विश्वकर्म्मकुलप्रदीपकलिके! किमिदमेकपद एव पतन्तीनां दशानां दशानामुचितमुत मरुतां प्रवरस्य पितुः प्रकोपवेगपरिपाकोऽयम्? आहोस्विदन्तःकरणपात्रपरिपूरणपरिवाहिणः प्रियस्नेहरसस्योच्छलनफलमदो यदकाण्ड एव जगदन्धतमससंकुलतामुपनेतुमविच्छिन्नस्नेहदशेव निर्वाणमुपगतासि। निष्कलङ्ककुमुदवन्धुबिम्वशुचिचरित्रया विचित्रप्रणयपरिणामविस्मितजनतया विषण्णवान्धवजनवदनकमलवनविधुवनपवनधारया, जननीजीवनावसानप्रयोजनज्वलितदुर्वारसंज्वरौर्व्वशिखया, सहचरीचित्तशूलशल्यव्यथया, कथयैव केवलमवशिष्यसे। ननु निरनुक्रोशे! ज्वलतु हताशा मन्दारिका। कथमकरुणे! मातरमनन्यापत्यामपि वराकीमीदृशस्य शोकस्य गोचरमकरोः? तथाविधप्रकृतिशीतलशीला केन दारुणमाचारमनुशिक्षिता तृणमिव त्यक्तवत्यसि वन्धुजनजीवनधनमात्मनः शरीरम्? अननुभूतमिव विस्मृतवत्यसि जननीसौहृदम्, एवमिदानीमकाण्डपरिहृतप्राणया त्वया परिभूता प्रकृतिकोपनस्य स्वभाववामस्य बहुवल्लभस्य वेशदासीवशीकृताशयस्य विशेषतो महामुनिशापपरवशस्य विश्वकर्म्मणो दुर्भगा गृहिणी त्वदेकबन्धुरनसूया किमवलम्ब्य कुटुम्विनीनां धुरि वर्त्तमानमात्मानं गणयतु।

सहचरि! चित्राङ्गदे! सेयमप्रदीपपरिहार्यतिमिरसंहतिरसंभाविप्रभातसमया रजनिः, अस्यामनधिशयितमणिपल्यङ्कमनालिङ्गितमातृकण्ठमसंवाहितचरणमपास्तजननीस्तनचूचुकनिवेशिताधरपुटावलेहनमालीजनानुपहसितस्वप्नायितप्रलपितमपनीतधात्रीकरगृहीततालवृन्तवातवीजनमश्रूयमाण-

पार्श्वपरिवर्त्तनमुखरमणिवलयनिक्वाणमश्वसितमहिक्वितमस्पन्दमनया निरवसानदीर्घया निद्रया निद्रासि, यत्र निशाविच्छेदप्रहतपटुपटहसहस्रैरसाध्यः, मङ्गलगीतिमधुरध्वनिभिरनाधेयः, शुकशतघुष्यमाणगाथाभिरनुत्पाद्यः, सारिकागृहीतनामधेयप्रतिपन्नचेतनाचमत्कारणामविषयः, धात्रीकरावघट्टनैरनिर्वर्त्यः, प्रथमप्रबुद्धसहचरीचरणमञ्जीरशिञ्जितानुविद्धसारसक्रेङ्कारनिकरैरजननीयः, द्विजबटूनामध्ययनस्वरैरसंभाव्यः, पुनरपि जगति दुर्लभस्ते जागरः। हा! मातरनुसूये! मुषितासि दैवहतकेन। या त्वमुषसि जागरारम्भजृम्भाविदलदधरदलमर्ककरसंपर्कविघटमानपुटबन्धबन्धुरसरोरुहानुहारि, सामिसमुन्मीलितनिद्राकषायनयनमलिकफलकविलुलितालकलतालङ्कृतमवमृष्टपत्रलेखाकुङ्कुमरजोधूसरकपोलपालि, स्वापसुखप्रत्यूहकोपेन कोकनदकिसलयकपिलकान्तिहसितरुदितान्तरालकालोदितविस्खलनविकलाल्पकलजल्पमात्मजामुखमङ्गलदर्पणमतः परस्तान्न कदाचिदपि विलोकयिष्यसि, न च प्रमदवाष्पपूरितया दृशा विलोक्य चिरं चुम्बिष्यसि। पुण्यवति चित्राङ्गदा जीवतीति मुनिवचसि विश्वसति मन्दोदरि! भ्रम पृथिवीम्, अधिरोह दिवम्, अवरोह पातालम्, आरोह गिरिशिखराणि, विचिनु वनवीथीः, अवगाहस्व सरितः, नगरेषु ग्रामेषु च पृच्छ जानपदान्, उल्लङ्घस्व गोष्पदमिव सागरान्, आसादय द्वीपान्तरम्। अयि विफलप्रयासे! पुनरपीह जन्मनि मन्ये संगमिष्यसे चित्राङ्गदया। हताशे! प्रियसखीप्राणावसानसाक्षिणि! मन्दभाग्ये! मन्दारिके! चिरतरमतः परं जीव। घृणारहिते! निधिमिव गोपाय प्राणान्, अपगतत्रपे! दर्शयात्मानममरसदसि, कलङ्कितविद्याधरवंशचन्द्रे! भूच्छायेव मलिना प्रकटमुपलक्ष्यस्व, विषयमृगतृष्णाविप्रलब्धे! मा कदापि त्यज संसाररसाभिलाषम्, अननुकम्पितप्राणाधिके! शरीरमनुकम्पस्व, मृषाप्रणयमानिनि! निसर्गनृशंसेषु गण्यस्व, भगवति! भुवनपावनपुण्ये! सरस्वति! न गणय वीतपुण्येति, मन्दभाग्येति, नृशंसेति, वंशाननुरूपचेष्टितेति, न निवारय कोपादिव कपिलसलिलमयकलेवरा केलिकलहाकुलकलहंसकुलकोलाहलाविकलकेयूरक्वणितेन परिभ्रमणमुखरभ्रमरमण्डलकङ्कणझङ्कारवाचालविकचकोकनदचपलकरतलेन तरङ्गबाहुना, त्वयि शरणमिच्छन्तीमशरणामनाथामिमां मन्दारिकां नाम विद्याधरिदारिकाम्। अयि! करुणामयि! कल्पय सलिलेषु ममावकाशम्। इदं मलिनमपि मम कलेवरमङ्केनादाय मृगमिव मृगाङ्कमूर्त्तिरात्मनो दयालुतामेव व्यञ्जयिष्यसि, न पुनरशौचम्। प्रतिगृहाण मम चरम(म)भ्यर्थः

नाञ्जलिम्। उपनय मां तत्र यत्र परत्रेह वा चित्राङ्गदा, प्राव(प)य मां भर्तृकाचरणपरिचरणोचितं विषयम्, एकदा पुनरपि दर्शय प्रियदर्शनाया मूढसहचरीजनपरित्यागलज्जाविलक्षम् अतर्कितोपनतमदागमनहर्षतरलत्रिभागनयननलिनम् एहीति मन्युविस्फुरिताधरमधुरेण वचसा मुखरं मुखेन्दुम्। अथवा किमितरदभ्यर्थये त्वरितमपहर प्राणान्। अतः परमनुपरतजीविताया मम मन्दभागिन्या वियुज्य चित्राङ्गदया मन्दारिका जीवतीति जनापवादडिण्डिमध्वनिरयमशक्यप्रतिक्रियः। पृथगेव मन्दारिकातश्चित्राङ्गदाप्राणा इति पिशुनजनजल्पविषस्य दुश्चिकित्सः प्रसरो न केवलं कलेवराभ्यामेव, यावदात्मभ्यामपि भिन्ने चित्राङ्गदामन्दारिके, कथमितरथा सान्तरं मरणमनयोरिति कल्पस्थिरमिदमपयशो न शक्यते निराकर्त्तुम्। उज्जृम्भमाणदुर्यशसो नास्त्ययं परो वा लोक इति वहुविधं विलप्य सरस्वतीस्रोतसि पतितुमारम्भमकरवम्।

अत्रान्तरे सरस्वतीतटप्ररूढवटविटपिस्कन्धवन्धसौधशिखरादवलम्बमानप्ररोहावकाशवातायनविवरवर्त्मना निभालितसकलास्मदीयवृत्तान्तो मम मातुलः कामपालनामा वनपालो गुह्यकः प्रसह्य तस्मादनेकतालतुङ्गादात्मनो निवासतरुप्रासादादवतीर्य मरणव्यवसायवद्धपरिकरमेनमभागधेयानां प्रथममनाथानां निदर्शनममरणानामुदाहरणं जनं मा मैवमिति वलान्न्यवर्त्तयत्। तमवलोकयन्त्या मम भयेन लज्जा, लज्जया शोकः, शोकेन निर्वेदः, निर्वेदेन विलक्षता, विलक्षतया जीवितजुगुप्सा, जीवितजुगुप्सया चिन्ता, चिन्तया स्वजनासूया, स्वजनासूयया शङ्का, शङ्कया मोहः, मोहेन दीनता, दीनतया विषादः, विषादेन जडिमा, जडिम्ना विस्मय इति परस्परं समवेत्य प्रतिपत्तिमन्तःकरणवृत्तेरपाहरन्।

ततो मुषितमिव, लिखितमिवोत्कीर्णमिव, वीतचेतनमेनं जनमनेकविधाभिरुपदेशकथाभिः प्रकृतावस्थापयितुमारभमाणो विद्याधरनिलयं पारियात्रपर्वतप्रवरमथवा गुह्यकागारं गन्धमादनगिरिमुपनेतुमयतत। यदा न शशाक चित्राङ्गदाविरहिताया मम वन्धुवेश्मगमने मनोऽनुकूलयितुं तदा सान्त्वपूर्वमुपदिदेश मातुलः कामपालः—

वत्से! मन्दारिके! विदूरावस्थितस्य पश्यत एव मम मोहाभिभूतामपहाय त्वामेनमेव जीव(वीज)पूरतरुमारुह्य सरस्वत्यामपातयदात्मानमनुसूयागर्भसंभवा तव प्रियसखी चित्राङ्गदा। किं न पश्यसि यदिदानीमपि तदवपतनवेल्लितकल्लोललङ्घिततटभुवि प्रतितिनिवृत्त्य

प्रकृतावव स्थितेऽपि वारिणि पुण्डरीकाणि रक्तोत्पलभ्रममुपजनयन्ति लाक्षारसक्षालितानीव लक्ष्यन्ते, साम्प्रतमपि कुङ्कुमक्षोदपिञ्जर-कोकनदपराप(ग)पटलच्छुरितपक्षाणीव चक्रवाकचक्रमनुकुर्वते चक्राङ्ग-कुलानि, सम्प्रत्यपि प्रत्यूषसंकोचनिरुद्धमधुकरप्लवनचपलेन मयूरचन्द्रक-प्रतिरूपेण सारस्वतोच्छ्वासाम्भसा भरितगर्भाणि निर्भररुदितताम्रवाष्पो-त्पीडपूरणपीडिततरलतारकाणीव कुमुद्वतीविलोचनानि खेदयन्ति विदित-वृत्तमेनं जनमामीलनदुःस्थितानि कुमुदानि, नाधुनापि जहति पङ्कपङ्कमेतानि प्रतिदलविगलदरुणसलिलविन्दूनि विलुलितस्खलितमकरन्दधारामसृण-नालदण्डानि कथमपि भ्रमरमण्डलेनावध्यमानपदानि प्रणयकुपितकुलवधू-विलोचनतुलितपाटलिमानुविद्धप्रकृतिनीलकिसलयानि कुवलयानि, नाद्यापि त्यजन्त्यार्द्रतामलक्तरसमज्जनोत्तीर्णा इव गन्धतैलावसिक्तरक्तपटवास-पङ्कपिच्छिलसैकताः कच्छभूमयः, जानामि पयसि विलीयमानया चित्राङ्गदया संविभक्तमिवानुरागमेतानि वहन्ति कोककलहंसकोकनद-पुण्डरीककुमुदकुवलयसैकतस्रोतांसि, तदेवमपि मा स्म विशङ्कथा विपन्ना चित्राङ्गदेति। न खलु मूर्त्तिमतीव करुणा भगवत्यरुणोदा सरस्वती किमपि सत्त्वं व्यापादयति। श्रूयते हि क्षात्रीं नृशंसतामत्यजता ब्रह्मर्षीभूतेन भगवता विश्वामित्रेण प्रेरिता मैत्रावरुणिं मुनिमपोवाह, न तु प्राणै-र्व्ययोजयत्, प्रत्युताभिमतमुद्देशमासादयामास। विद्यन्ते चास्य पातालकूपादि-वोद्ध्रियमाणस्यागाधमूलस्य महाह्रदकलशस्योत्तारणसूत्राणीव परितः प्रसर्पन्ति निगूढानि सरस्वतीस्रोतांसि। एकमितो दक्षिणपूर्वेण वर्त्मना प्रविशति सितासितसरित्संभेदम्, अपरमस्माद्दक्षिणेन मार्गेणासादयति गोदावरीम्, इतरदतः पश्चिमेन पथा पावयति चन्द्रभागाम्, अन्यदे-तस्मादुत्तरेण वाटेन प्रत्युद्गत्य प्रतीच्छति हिमवतः प्रभवन्तीमतिथिभावेन गङ्गाम्। एतावदहं न जानाम्यमीषामन्यतमस्य कस्य प्रवाहस्यातिथिरभूत्? कमुद्देशमनीयत भगवत्या सरस्वत्या? क्व वा न्यधीयत चित्राङ्गदेति? तदुपदि-शामि—गच्छ त्वमनया मदुपदर्शितया सरण्या भगवतः श्रीकण्ठस्यायतनम्। अस्याभ्याशे महामुनिमतीतानागतवृत्तविदमात्रेयमृतध्वजं नाम शरणमेष्यसि। स निश्शेषतः कथयिष्यति परमकारुणिकश्चित्राङ्गदाया गतिम्, असौ करतलगत-मिव साक्षात्करोति समाधिमयेन चक्षुषा चतुर्दशभुवनवृत्तम्, तदात्वगतमिव पश्यति जनुरन्तरम्, आशयविपाकानामलमेष मूलं विवेक्तुम्, एकदेशस्थितोऽपि निरीक्षते व्यवहितविप्रकृष्टानि सूक्ष्मनिगूढानि सर्वाण्यैहिकामुष्मिकाणि, स वेत्त्युत्पत्ति विनाशमात्मानमनात्मानं बन्धमपवर्गं धर्ममधर्ममर्थमनर्थं च, त्यज

मरणाय दुर्व्यवसायम्, आधेहि धैर्यम्, उपचर मैत्रीसमुचितेनाचारेण सहचरीजनव्यसनव्याधिमिति कामपालोपदेशमेव तदात्त्वोचितं मन्यमाना योषित्स्वभावसुलभेन कार्पण्येन, दैवस्य दारुणस्य प्रेरणया वा, दुस्त्यजतया वा जीवितस्य, दुर्म्मोचतया वा सहचरीसङ्गमप्रत्याशायाः, दुर्वारतया वा यावदायुः प्राणनस्य, द्रष्टव्यतया वा बहूनां व्यसनानाम्, अनुभवितव्यतया वा बहुविधानां व्यथानाम्, अस्मान्मरणव्यवसायाद्व्यरंसिषम्। अथ चित्राङ्गदाचरणचिह्नपद्धतिसनाथासु पदवीषु प्रतिकूलं पदान्यादधती, तया विश्रम्य व्यपनीतश्रमासु तदासनबन्धलाञ्छितमूलासु तरुच्छायासु बहुविधं विलप्य धरणितललोठनशतानि तन्वती, तया विलङ्घितपूर्वाणि तदङ्घ्रिकमलाङ्गुलिदललक्ष्माङ्किततीरपङ्कानि प्रत्यग्रतदुन्मज्जनगलितजलधाराविन्दुकितपर्यन्तेन पादयुगलावष्टम्भलक्षणेनोपलक्षितदक्षिणतटसैकतानि सरितां स्रोतांसि वाष्पपूरेण वर्द्धयन्ती, तदीयलालित्यवर्णनमुखरजानपदेषु ग्रामीणवृद्धाजनानुशोच्यमानतदवस्थेषु मामवलोक्य स्मृतिपथारूढतदाकारैरश्रुलवलुलितलोचनकुवलयैरुपशल्योलपग्रासविरतस्तिमितमुखैररण्यहरिणैः करुणमवलोक्यमाना, उन्मनायितमृगीवदनेषु परित्यज्य प्रतोदमुपगतैरेनमभागधेयानां प्रथमं जनमभिवीक्ष्य पुनस्तदावृत्तिशङ्कया धावद्भिरावद्धमण्डलनिरवकाशीकृतपथैः खेटपरिसरदालिकैरनुयुज्यमानतदुदन्तेषु गाथानिवद्धतदीयगुणगानैकतानशिशुजनेषु जनपदेषु प्रत्यक्षमिव तामनुभवन्ती दीर्घमध्वानमुदतरम्।

अथासाद्य भगवतो मुनेरात्रेयस्य विविक्तमाश्रमपदममुत्र चिरप्रोषितममुमृषिप्रवरं नापश्यम्, अपि तु वानरकरजोल्लेखलाञ्छिताखिलकलेवरमपगतप्राणमपव्यस्तपतितमाश्रमपालवानरविनिवारितश्वापदविलोपमुत्सर्पितनुप्रभापटलपूरितकक्कोलतरुमूलं कमपि कुमारीजनमवालोकयम्। पश्यन्ती तथाविधां कुलकन्यकामन्तःकरणावतीर्णया नूनमेवमेव क्वापि लोके चित्राङ्गदा निवसतीति चिन्तया कियन्ति शोकचेष्टितानि व्यतनवमिति स्मर्तुमपि निस्सहास्मि, किमुत कथयितुम्।

अथ भगवन्तमृतध्वजं विचेतुमितस्ततो वनाद्वनमटन्ती दिवानिशविभागानामनभिज्ञा न जानामि कतिभिर्दिनैः, केन वर्त्मना, कया गत्या, केन जनेनोपदिष्टा, कमर्थमनुरुध्य, कया दिशा बहुयोजनं व्यतीत्य खाण्डववनस्यैकदेशे दक्षिणपूर्वेण गालवमुनिनिवासविल्वमुपयमुनं कणादस्य मुनेराश्रममासन्नमलक्षयम्। ततो नातिदूरादभ्युदयनिःश्रेयससाधनमाम्नायप्रामाण्यमूलमतिगहनतत्त्वं धर्ममेव जिज्ञासमानै-

रपवर्गाधिगमाय सदृशेन विसदृशेन च धर्मेण पदार्थजातमितरव्यावृत्त्या विवेचयद्भिरणोः स्थूलस्य च भूतस्य घटनविनाशप्रक्रियाकोविदैर्द्विप्रमाणी-सहकृत्वभिस्तर्कैर्विशोधितविभुवादकण्टकैरन्तः करणाणवव्यवस्थापनपटुभिः पाकप्रभवभूतगुणगणक्षणगणनपरीक्षादक्षैरपेक्षामतिक्षयसमयसाक्ष्यविचक्षणै-रक्षीणसंस्कारकर्म्मसन्तानानुवर्त्तनविज्ञानैरपूर्वबुद्धिविशुद्धैरखण्डितजातिस-मवायविशेषैर्बटुभिरारब्धं वादकोलाहलमशृणवम्। नातिदूरे तस्मादाश्र-मात्कलिन्दनन्दिनीसलिलोच्छ्वाससन्ततार्द्रमूलस्य परभृतकुलकूजितवाचाल-शाखस्य लताप्रतानग्रथनदुर्विभावविटपभेदस्य परिमलानुसारभ्रमद्भ्रमरनि-कुरम्बद्विगुणितनिबिडच्छायान्धकारस्य तरुषण्डस्य मध्ये परित्यक्तपरि-चारमपि दुरभिभवेन क्षात्रेण तेजसा कतिभिरक्षौहिणीभिरिव परिवृतम्, कृशिमावशेषशरीरमपि प्रसर्पिलावण्यपरिणाहपूरणादलक्ष्यतनुसन्धिवैषम्यम्, अनवरतनिपतदसमशरशरनिकररणिताकर्णनदत्तकर्णमिव तिर्यग्वलितनिःस्प-न्दकन्धरम्, किमपि,किमपि शून्यमेव स्तोकविवृतकर्णविशृङ्खलं मन्त्रयमाणम्, आकाशबद्धदृष्टिम्, उन्मुखावस्थितम्, ऊर्ध्वप्रसारितवामबाहुमुष्टिकल्पिताली-ककोदण्डदण्डाकर्षणाभिनयाकर्णवलितदक्षिणभुजम्, पततः कस्यापि वस्तुनः प्रतिग्रहायेव सङ्कलितोभयकरम्, उत्थाय धावन्तमित इतो लतामूलेषु तरुतलेषु पल्वलसलिलेषु कालिन्दीतीरेषु किमपि प्रनष्टमभिमतं वस्तु विचिन्वन्तम्, अलब्धविचितिफलम्, अतिकरुणमाक्रोशन्तमेकं पुरुषमुग्रप्रियया मूर्त्योन्मत्त इति निरचिनवम्।

तस्मिन् महात्मनि प्रियसखीप्राणेशस्य तरणिप्रणप्तुर्विदर्भापतेः सुरथस्य च्छायामुपलक्ष्य करुणं प्रलपन्त्या मया महाभाग ! कस्य वंशस्य भूषणमसि ? केन कारणेन निदाघक्लान्तकलभक इव निःश्वसन्ता (न्ना)-न्तरं परितापमुद्वहसि ? कुतो मत्त इव परिभ्रमसि ? इति मुहुर्मुहुरनुयुक्तो मदनोन्मादविकलचेतनोऽपि निसर्गधीरतया पर्यवष्टभ्यात्मानमवोचत्—भद्रे ! किमनेन वंशप्रश्नेन, कलङ्कितमनुकुलमेनमिन्द्रद्युम्नं नाम विधिवञ्चितं जन-मतिनिबिडया व्रीडया योजयसि । प्रकृतिकारुणिके जने निवेदितो गुरुरपि लघूभवति संविभक्त इव व्यसनभार इति कथयामि त्वयि निजमुदन्तम् । एकदाऽहमात्मसहचरैरवनिपतिकुमारैः सह मृगयाविहारकौतुकादटवीं विगाह-मानो गगनात् पतन्तं बन्धुजीवपादपम्, अस्य शाखामाश्लिष्य पतन्तीं च कामपि कन्यकामपश्यम् । तामस्पृशमु (न्मु) खैर्नाराचैरेनमवनिरुहं लवशो न्यकृन्तम् । अनन्तरं पश्यत एव मम तां दिव्यदारिकामपोवाह गन्धवाहः, येन मम नयनपथमतिचक्राम, क्वापि च विषये प्रपात गत्वा सा कृशोदरीति । तदवधि

व(म)दनोन्मादव्याधिदुःस्थितः परित्यक्तपरिजनः पृथिवीमटन्निह कणादमुनेराश्रमे वत्सेनेक्ष्वाकुनन्दनेन गुरुकुले ब्रह्मचरता सुशर्म्मणा विनोदितहृदयो बहूनि दिनान्यगमयम्। अधुना तस्मिन्नपि समावृत्य विद्याव्रतमयोध्यामुपगते द्विगुणावेगविक्लवो वनेषु भ्रमितुमारभे। त्यज मामिति त्वरितमभिधाय दिगन्तरमधावदिन्द्रद्युम्नः।

ततो यदृच्छयाऽहमासाद्य कोशलानमुत्र मरुपर्यन्तवटविटपिविटपाग्रे लतापाशेन संयतं शिशुमपश्यम्। असौ रुदितविकलमित्थमभ्यर्थयाम्बभूवे—कल्याणिनि! प्रसीद मयि मुनिकुमारे जाबालौ, व्रज विपन्नस्य ममाभ्युपपत्तये नातिदूरादितो नगरीमुत्तरकोशलाम्; तत्र राजावरोधं प्रविश्य द्रक्ष्यसि वृद्धमधिपतिमयोध्यायाः, तस्य सधर्मिणीं च धर्मधनां देवीम्, अस्य कुमारं च शकुनिम्। एतेषु समवेतेषु श्रावयिष्यसि मयोदीरितामिमामुपगीतिम्—

तात! मनुवंशवर्द्धन! मातश्शैव्ये! सखे! शकुने।
कपिबद्धो जाबालिः शरणं कस्याधुना व्रजतात्॥ इति।

तस्यामुपगीतौ त्वया गीतायां प्रतिकरिष्यन्ति ते तव मम च विपदमिति जाबालिसंदेशभात्मनश्च व्यसनमावेदयितुमागताऽस्मि युष्मत्सकाशम्। इतः परस्तात् प्रभवति भवती। काऽहमस्यां चिन्तायाम्।

इत्यभिधाय देव्याः शकुनिमातुः पादयोः पतन्ती मोहमविशन्मन्दारिका। तस्यां स्वयमेव देव्या शैव्यया जलार्द्रपवनेन प्रतिलम्भितचेतनायामृतध्वजो मुनिरखिलमपि समाजमाश्वासयन्नुदाजहार—पुत्रि! मन्दारिके! यं विचिनोषि, सोऽहमृतध्वजः, यश्च भवतीनामेवंविधस्य व्यसनस्य मूलम्। एष राजा सुरथो महीपतेरिक्ष्वाकोर्दक्षिणमवकाशमधिवसति। समाश्वसिहि, ध्रुवमेतदवसानानि युष्माकं व्यसनानि। निरामया जीवति सप्तगोदावरे मदुपदिष्टं समयमितराभिरात्मनोऽनुरूपाभिस्तिसृभिरभिजातकन्यकाभिः साकमचिरमिलितमन्दोदरीपरिचरिता विचित्रचरिता चित्राङ्गदा। त्वमपि पूर्वमेव परिकल्पिता देवैः सुशर्म्मणः सधर्म्मिणी, गच्छ सप्तगोदावरम्, अचिरादागतानस्मानवेत्य प्रतिपालयिष्यन्ति कियतो दिवसानमर्त्यदारिका भवत्य इत्युपरतवचसि मुनाविक्ष्वाकुरादिदेश—

कञ्चुकिन्नार्य्य! रुक्माङ्गद! वद मद्वचसा रणभीमं ता(ना)म सेनान्यम्। असौ प्रापयतु दिव्यदारिकामिमां सप्तगोदावरम्।

आयुष्मन्! वत्स ! शकुने ! त्वमितस्त्वरितमासाद्य वटविटपे वद्धमुन्मोचय दीर्घायुषं जाबालिम्, इतः पञ्चमेऽहनि तस्य यौवनोद्भेद-समयः। वत्सौ! दण्डसुशर्म्माणौ ! वहुभिरक्षौहिणीभिः पर्य्यवष्टभ्य खाण्डववनं विचिनुतमायुष्मन्तमिन्द्रद्युम्नम्, चिरादेव दिदृक्षामि षड्भिरमानुषकन्यकाभिः कृतदारान् भवतः। वत्स! सुरथ! त्वमपि त्वरितमेहि विदर्भाम्, इतो न चिरादेष्यसि सप्तगोदावरमित्याज्ञासमनन्तरमाचकर्ष रणभीमसकाशमुपनेतु-मनुगृहीतास्मीति प्रणिपत्य व्रजन्तीं मन्दारिकाम्। रुक्माङ्गदो गृहीतशासनो मन्दारिकामनु प्रतस्थे। सुरथो गुरूणां नयनपथमतिवर्त्य वहिःकक्षायामासाद्य मन्दारिकाम्, अनया बाष्पधारालुलितलोचनयाभिवादितो मुहूर्त्तमनुध्याय दीर्घमुष्णं च निःश्वस्य निभृतमामन्त्रयाम्बभूव—

सखि ! मन्दारिके ! शिवास्तव सन्तु पन्थानः, मा भवन्तु वन्ध्यास्तव मैत्रीमया व्यवसायाः, मा कदापि तव प्रत्यूहमादधतु वर्त्मकण्टकाः, सुप्रभाता तव रजनिः, आनन्दविराम-स्तव दिवसः, सुलभच्छायास्तव विश्रामतरवः, मा तवाध्वखेदमभिवर्द्ध-यन्तु दूरनिरस्तनीरनीरसा मरवः, नचिरादासादय सखीसंगमश्लाघनीय-जीवना सप्तगोदावरम्, आसाद्य विरहकातरा परिरभ्य निजवृत्तनिवेद-(ना)वसाने प्रसृतेषु कथावन्धेष्वस्यापि व्यसनलतामूलबीजस्य जनस्य दैव-दुश्चरितचेष्टितानि कथयिष्यसि—देवि! नैमिषे न्यग्रोधपादपमूले करग्रहण-प्रसादेन सत्कृतमनुस्मरसि सुरथं नाम दासजनम्, असौ विश्वकर्मशापप्रवृद्ध-तीव्रवेगया काञ्चनया त्रयोदशयोजनान्यपवाहितः कथं कथमपि गोमती-तीरमाससाद, तेनातिशयितसंज्वरेण वाडवमनुकुर्वता दह्यमानजीवना सागर-गृहिणी भगवती गोमती पातालविवरविपुलोदरनिगीर्णमपि तं जनं गरुत्मानिव निषादीपतिं द्विजमुज्जगार, तस्य नलिनीकिसलयस्येव जलादुन्मज्जतोऽपि नालक्ष्यत क्वचिदपि प्रतीके सलिललवः, तत्र तप्तकपाल इव पतितानि सिमसिमायितमेव व्यतन्वत तत्कालविलीनानि पाथःपृषन्ति, स तदात्वशुष्क-कठोरकण्टकप्रकरकर्कशनलिननालसंयतकलेवरो मर्मरितशैवालवल्लिविच्छुरण-किर्म्मीरपङ्कलेपभसितमलिनो गोमतीसलिलादुत्तीर्य्य कतिचिदावेगविकलानि पदानि गत्वा हरितोरुदघ्ननवोलपपल्लवासु कच्छभूमिषु चिरमातुरो व्य-श्राम्यत्। अनन्तरमुत्थाय मन्मथोन्माथमन्थरमुत्तरं पन्थानमारुह्य महतीमटवीं विगाहमानो लतासु त्वदनुकारितनुभङ्गिषु, तव करतलरागसुभगेषु तरु-पल्लवेषु, त्वन्नयननीलनलिनलीलालालित्यलवलाञ्छितविलोचनेषु हरिणेषु, तव गतविलासाभिनायिषु मत्तगजेषु च विनोदितया दशा कथमपि परि-

पालितप्राणो गन्धमादनं नाम गुह्यकगिरिमाससाद। तत्र नारायणोरुसंभवेनाप्सरसां प्रवरेण पुरूरवःप्राणभूतयोर्वश्या विलूनकुसुमस्तवकस्य परिपाकपाटलफलपटलावच्छन्नतया धातुमयगण्डोपलावलीं विडम्बयतो महतो वदरद्रुमषण्डस्य मध्ये सह धर्मसुतेन युध्यतः प्रह्लादस्य चापकोटिसमुत्सारितविपुलोपलोद्घातसमीकृताजिरे नरनिवासगुहागृहे निजां वसतिमरोचयत्। तत्र स्थितः कामपि सङ्कल्पमोहोपकल्पितशौनकाश्रमाभ्याशवृत्तसाक्षात्करणेन, कामपि भविष्यति स दिवसो यत्र पुनरपि तदाननेन्दुमवलोकयेयमिति मनोरथैरनेकां निशां निनाय। ततः सुकेशिनीवचनाश्वासितो मन्दोदर्या सह पयोष्णीमासाद्य कोशलानुपजगाम। दृष्टश्च मया मानवस्येक्ष्वाकोः सदसीति मम वृत्तमावेद्य तस्या विबुधवार्द्धकिदुहितुरक्षिभ्रुवचेष्टितेनान्तःकरणवृत्तिमपि प्रभवसि चतुरा परीक्षितुम्, यदि कदाचिदशिथिलमेव मयि तस्या निर्भरानुरागमवधारयिष्यसि, यदि वा विदितवृत्तोऽपि प्रकृत्यापन्नोऽपि न द्रुतमिह सन्निदधातीति प्रणयकोपादुन्नतभ्रूलतालङ्घितललाटसीमानमायतश्वासविस्फुरदधरकिसलयमापाटलकपोलपालिविच्छुरितकपिलकटाक्षच्छविच्छटमस्या वदनेन्दुमुपलक्षयिष्यसि, तदा प्रणिपातशतेन मन्मयी भूत्वा शरदिव सरितं प्रसादयिष्यसि, तां प्रसन्नामालिङ्ग्य राजहंसीव मधुरमिदं वचनमुदीरयिष्यसि, मा कदापि जरठदलमिव, संध्याविरामसमयमिव, जीर्णकुसुममिवापरागमेनं जनं जानीयाः। सदस्य इव सदा सभाऽवस्थितो न गणयत्यात्मनो वंशमहिमानम्, तृणमिवोपेक्षितुं क्षमते विदर्भक्षमापाललक्ष्मीम्, अपहस्तयितुमीहते महेन्द्रमैत्रीम्, अनादृत्य वर्त्तते गुरुकुलादुपात्तानि श्रुतानि, न व्यवस्यति शीलेन सदृशम्, अवधीरयति धीरताम्, अपवर्गमपि न बहु मन्यते, नरकमपि न विद्विषति (द्वेष्टि), प्राणपरिपालनमपि नानुरुद्धयते, मरणादपि न बिभेति, सैवेयमस्याभिजातिः, असावेव श्रीः, अयमेव महद्भिः परिचयः, स एवाम्नायसंप्रदायः, तदेव सुचरितम्, सैव कृतज्ञता, एतदेव निःश्रेयसम्, एषैव जीवनवृत्तिः, यदेकदापि पुनस्त्वदाननेन्दुकौमुदीमहसि चिरपिपासितस्य लोचनचकोरस्य पारणम्, एक एव स इह जन्मनि तस्य जीवितजागरितक्षणः, यत्र संकुचितकोकनदकोरकानुकारि त्रपासंकुचितसर्वाङ्गुलि तव करतलमात्मनः पाणिना न्यपीडयत्, इतरस्तु निद्रादशैव निधनावस्थैव वा भवेत्। एतावदेव तन्नयनयोर्मधुरमिह जगति वस्तु, यत् त्वदाननमिति, त्वमिति, त्वत्पाणिरिति नाम। यत्पुनरितरदिन्दुलेखाकनकवल्लिकेल्लि (लि) पल्लवप्रभृति प्राकृतजनमनोमादनम्, इदमक्षियुगले पांशुपूरप्रक्षेपो वा, धूमधोरणिर्वा, वातशूलं वा, दूषिका वा, वाष्प-

धारामेव प्रवर्त्तयितुमवतरति। तावदस्य क्षुद्रस्येव नदस्य पांशुपूरे निलीनमथवा सर्वेणापि हेलया लङ्घनीयमधिगच्छ कृशतरं जीवनम्, एष यावन्न वर्द्धते त्वया कादम्बिन्येवोपनीतो निकाममधुरो रसः, मा कदाचिदवेहि जीवतः सुरथस्य कालविलम्बम्, आगतमवगच्छ सप्तगोदावरम्।

इति विरतवचसि राजनि सुरथे, चित्राङ्गदाविरहादप्यधिकेन तत्कालभाविना सुरथविप्रयोगेण वाधिता मुहूर्त्तमनुध्यायाभिदधे मन्दारिका—महाभाग! गुरुशासनपरतन्त्रतया सप्तगोदावरमतिक्रम्य विदर्भां व्रजन्नपि नापराध्यसि, साधय शिवं तव वर्त्मनि, चिरविरहकातरां विनोदयादौ विदर्भाम्, अनन्तरमभ्युपपद्यानन्दयिष्यसि प्रियसखीम्, अस्पृष्टवामस्वभावाम्, अविषयं मत्सरपदस्य, नित्यदक्षिणाम्, अविदितकोपलक्षणाम्, असूयालवानुपज्ञहृदयाम्, अज्ञातमित्रविपक्षविभागाम्, अखिलजनवत्सलां चित्राङ्गदाम्। अवेहि, किमतः परं प्रियतरमनु-(मु)ष्या यदखण्डविग्रहमासादितवान्धवसमाजमस्खलितानुरागं महाभागमस्मन्मुखादाकर्णयिष्यति। तव प्रेम्णा तृणीकृतप्राणाया मम प्रियसख्याः प्राणनोपकरणेषु त्व(त्व)दाननावलोकनत्वदालापप्रभृतिषु का श्वाघा, केवलमवन्ध्याभिलाषमलङ्घितगुरुशासनमखण्डितसच्चरितमनवधीरितलोकवृत्तमखेदितवन्धुजनमपिशुनोपहासगोचरमभिमतव्यवसायपूरितमनोरथमाशास्ते प्रियसखम्, अजस्रभाववा(ना)भ्यासवशेन भवन्मयीभूता कथं त्वदभिलषितादितरदभिलषेत्, तव प्रिय इत्यात्मनि प्रीयते, तव हृदयाय रोचन्त इति धारयति वहुविधं पीडयतोऽपि सकलदुर्विपाकमूलभूतान्निजप्राणान्, अवनिनाथ! तव वल्लभेति धरणिमधिवसतिः(ति), कौमारमारभ्य त्वया परिगृहीतेति व्यसनधीरतामवलम्बते, कुतोऽपि कारणात्त्वामालिङ्ग्य वर्तत इति विपदमपि सर्वात्मना स्वीकृत्य वहु मन्यते, प्राणाधिक! निसर्गत एव प्रेयानसि, न त्वयि मूर्त्तिमति कल्याणे कमप्युपाधिमपेक्षते प्रीतिरिरिति किमत्र विधेयवस्तुनि पृच्छ्यते विधेयजनः, यच्च न सोढासि कालहरणम्, अविलम्बितमासादयितासि सप्तगोदावरम्, अशिथिलमागत्य दर्शयिष्यसि चित्राङ्गदाया निजमाननेन्दुम्, इदमात्मन एव कृतज्ञतामनुरागसमुचितव्यवहारपेशलतामापन्नजनाभ्युपपत्तिधनतामकारणकरुणाकरतामदारुणप्रकृतिमायतिविशुद्धां बुद्धिं च जन्मनः प्रभृति संचितामतिप्रयत्नेन गुरूपासनशतेन च परिपालितामभिवर्द्धयिष्यसि, किमस्माकमुपकरिष्यसि? कमर्थमनुरुध्य याचनदैन्येन खेदयाम्यात्मानम्, अखिलमेव जानासि प्रियसखीमनसि नित्यसन्निहितस्तदीयमन्तःकरणविषयमित्यभिधाय तदभिमुखवलमानाननैव तमेव तमेव पृष्ठदेश(शं)

निपतदश्रुधारेण चक्षुषा निरीक्षमाणा कथं कथमपि कञ्चुकिना प्रतिकूलमिव प्रवर्त्तिताराजकुलमतिचक्राम मन्दारिका। ततो रणभीमेन सह प्रतस्थे तं देशम्, यत्र वेदवतीभ्यां मदयन्त्या मन्दोदर्या च संगता समयमन्वपालयच्चित्राङ्गदा ॥

इति श्रीगोकुलनाथसूक्तौ कथायां मन्दोदरीचरितं नाम षष्ठमाख्यानकम् ॥

---

## सप्तममाख्यानकम्

अथोत्तरकोशलानगरोपकारिकाप्रथमकक्षाप्रासादमूर्द्धनि पूरयन्निव रोदसी-विवरमुत्पतितपतितनक्षत्रलाजविकिरणाकुलदिक्कुमारीकदम्वकिर्मीरिताम्वरा-जिरः, जर्ज्जरितशिखरकुलाचलकुलकन्दुकक्रीडनावनतोन्नतावनिवनिताविताय-मानबलाहकपटवासपटलः, निर्भरभयचकितदिक्कुञ्जरत्यक्तगुरुतरभूगोल-भारभुग्नः, भोगिमल्लभोगाभोगभङ्गुरभुवनः, ससंभ्रमभ्रश्यदैरावतबृंहितः, दध्वान सेनासन्नहनदुन्दुभिः, येन निधनतापर्य्याणवन्धसमयविक्षतप्लुतकरभक-कदम्वमालानोन्मुच्यमानमत्तगजलालनचपलमहामात्रमाकृष्टशकटयोज्यमान - सूत्कारमुखरवृषभवृषमविशृङ्खलखलीनन्यासकालविधुतमूर्द्धवर्द्धितह्रेषाकल - कलाश्वीयमश्वतरपृष्ठारोप्यमाणगोणीगुणाकर्षणव्यापृतरजकजनमावद्धकवच - विचित्रसकलराजन्यमहमहमिकया धावितमखिलमेव नगरमवनिपतिसदनद्वारि पिण्डीकृतमिवाभूत् ।

अत्रान्तरे निजमायुधागारं प्रविश्य गृहीतप्रस्थानवेषः पितराव-भिवादयितुमन्तःपुरे तमेव समाजमाससाद, यस्मिन्नृतध्वजवशिष्ठा-रुन्धतीराजमिथुनाधिष्ठिते, मन्दारिकानिगदानश्रृणोत्, न्ययुज्यत च पित्रा जावालेरभ्युपपत्तौ युवराजः शकुनिः । तमुत्साहरोमाञ्चसूचिविद्धविवरसन्नद्ध-कवचमुद्भिन्नकुवलयकोरकेण कलिन्दकन्यकाप्रवाहेण भयादालिङ्ग्यमानमिव बलभद्रम्, पुङ्खावशेषदक्षाधररक्षिजननाराचदन्तुरया गजत्वचा आवृतमिव वीरभद्रम्, जगदिव ज्वलयितुमवनिमिव दारयितुमर्णवानिव शोषयितुमाशा इव विदलयितुमभ्रमिव भ्रमयितुमखिलब्रह्माण्डगोलमिव पिण्डयितुमकाण्ड एव प्रवर्त्तमानमाविर्भूतजाबालिव्यसनस्मरणहविरभिवर्द्धमानकोपपावकमवलोक्य सकललोकोपप्लवमापतितं वितर्कयन्ती तमेनं प्रकृताववस्थापयितुमुपदिदेश भगवत्यरुन्धती–

वत्स ! बान्धवजनजीवातो ! जानपदनयनचकोरजैवातृक ! युवराज-शकुने ! जीव । यदपि व्यतिचक्राम तव तदुपदेशावसरभूतमनपरा-घमुग्धमधुरमविदितविकारबन्धुरमनध्यासितकुसुमशरशरासनविविक्तशुचि - हृदयमनेकविषयाभिलाषमरुमरीचिकाविप्रलम्भानुपङ्गविश्रान्तकरणहरिणा - (नां)न केवलमस्माकमरीणामपि हृदयहारि प्रथमम् । साम्प्रतमिदमायुष्मतो विदितवेदितव्यलोकवृत्तमुपदिष्टोपदेष्टव्यसच्चरितमधीताध्येतव्याखिलाम्नाय-

मधिगताधिगन्तव्यदण्डनीतिवार्त्तमुपासितोपासितव्यगुरुकुलमनुभूतानुभवितव्य-यौवराज्याभिषेकसुखमाक्रान्ताक्रमितव्यवैरिमण्डलमुपात्तोपा(दा)तव्यदिगन्त-सामन्तदण्डमनुशासितानुशासयितव्यसकलभुवनवलयमभ्युदयेन वर्द्धते मध्यम-मुत्साहवर्द्धनं वपोः(यः)। युवानमुपदिशेदिति न धर्म्मसमयः, यौवनम-समयमामनन्ति शिक्षावचनानाम्। इह हि मीनकेतनबाणासनशिञ्जिनीशिञ्जि-तकलकलेनेव तिरोधीयते, मधुमासमनसिजयोः शिलीमुखपतनध्वनिभिरिवाप-ह्नूयते, प्रणयकुपितकामिदम्पतिचेष्टिताभिनयगुरुणा कलहायमानेन कामरति-मिथुनेनेवाभिभूयते, भावचन्द्रोदयोच्छलितशृङ्गारसागरकोलाहलेनेव मन्दता-मुपनीयते, नयनपल्लवरागोपचयवसन्तेन दुर्वारमदनिद्राप्रसरेणेव न श्रूयते, कूर्च्चकचविदूरमणिशलाकोद्धरणरणितैरन्तरित इव नाकर्ण्यते, विनतदृगन्त-च्छादितयोरिव कर्णकूपयोर्न प्रविशति, स्फुरदविनयवेत्रलताबिभीषित; इव दूरमपसरति, विविधविकारसंबाधे मनसि न प्रवेष्टुमीष्टे ज्यायसामुपदेश-शब्दः। तारुण्यविजृम्भमाणविषयाभिलाषमहारजनरञ्जिते वीतोज्ज्वलि-मनि मनसि न क्षमते गुरुशासनामृतक्षालनमपि विमलं स्वभावमारोपयितुम्। अखिलप्रतीकप्रसर्पितारुण्यवशादशेषभुवनपावनप्रकृतिरप्यशुचिरिवोपलभ्यते, निलीयावतिष्ठते, न पुनरात्मानं प्रकाशयति शिक्षासरस्वती। दृश्यमान-विशदैरवसानदुरन्तैरुपहासकुसुमैरासन्नान् मूर्च्छयन्तो यौवनमदान्ध्यविषद्रुमा न केवलं फलाशामपहरन्ति यावदनर्थमपि प्रसुवते जीवन्तः खेदमवसिताः शोकमर्ज्जयन्ति जन्मनः परि(प्र)भृति परिवर्द्धनप्रयत्नैरायासितानामुत्पत्तिहेतूनाम्।

वत्स! तथापि त्वामिदानीमपि गर्भरूपमिव, क्षीरकण्ठमिव, बाष्पवारिकलिलया दृशा पश्यन्ती प्रस्नुतपयोधरा मूर्द्धन्याघ्रायोत्सङ्गे निवेशयितुमुल्लसिताङ्कपालिरालिङ्गनाभिलाषप्रसृतबाहुरवशेन विकलीक्रिये वत्सलेन। साम्प्रतमपि भवन्तमितस्ततो भ्रमन्तमनुरूपकतिपयक्षितिपति-कुमारपरिवारमायासितधात्रीजनानुसृतचपलपदेन जानुभुजेन भवनाभ्यर्ण-सीमनि धावन्तमवनिपांशुपरिमर्षधूसरोरुपाणिमजिरमणिकुट्टिमप्रतिफलितेन निजवपुषा सह किमपि कलमधुरमुच्छ्वसितस्मितावदातद्वित्रदशनकोरक-किरणच्छुरितवदनारविन्दमनुमन्त्रयमाणमसुलभविषयाभिनिवेशवशप्रसृतरु-दितकदर्थितगुरुजनं जननीकरतर्ज्जनीतर्ज्जनत्रस्तमतर्कितोपनतमागत्य मम क्रोडे चीराञ्चलावृतनयनेन मुखनलिनेन निलीयमानमायुष्मन्तमनुध्यायन्ती चिरान्तरितमपि समयं नावबुध्ये। सम्प्रत्यपि युष्मत्कुलस्य, जगत एव वा गुरुणा शक्तिजनकेनामुना बध्यमानमौर्वमेखलम्, अवनह्यमानरुरु-

त्वचम्, अनुशिष्यमाणप्रैषमध्ययनस्खलनेषु, वेणुदलेन बिभीष्यमाणम्, अतिमहता प्रयत्नेन परिहार्य्यमाणबालचापलम्, चिरायुषमुत्प्रेक्ष्य प्रसीद भगवन्नतिक्रामति दिवसस्य तृतीयभागः, व्रजतु बालः, यथाभिमतं क्रीडतु सखिभिरिति प्रार्थनाशतेन गुरुकुलक्लेशान्मोचयितुमारभमाणा तमेव समयमनुवर्त्तमानमनुभवामि। किं न जानात्यायुष्मान्, एनमपि तव पितरमनतीतकौमारमिवोपदिश्य कृत्येषु नियोजयामि। तदिदमुपदिश्यसे—

कुमार ! दुर्वारविकारमसंवरमदमुद्दाममदनोन्मादमिदं मध्यममप्यधमं वयोऽभ्युपगतोऽसि, को नाम यौवनवनं प्रविश्य विकटविकारकण्टकैरखण्डितेन वपुषा निष्क्रामति ? कस्य तारुण्यतमस्विनीघनीभूतमदनिद्रामुद्रणमुषिततत्त्वोन्मेषस्य मोहमनुपनीतया चेतनया सुप्रापश्चरमवयोविवेकप्रभातसमयः ? केन गुरूपासनपोतमन्तरा बलादुत्तर्त्तुमिष्यते यौवनमदविकारसागरः ? नैनमुल्लङ्घितुं प्रभवति पवनोऽपि, किमुत कापेयचपलस्तस्य तनयः ? बहुलक्षपापक्षपातोपक्षीयमाणशुचिभावं दोषाकरसहस्रमसौ प्रसूते, न निश्शेषमेष शोषयितुं शक्यते कुम्भककोटिनियमितप्राणैः, किमेकेन कुम्भयोनिना ? नायमुद्वेल्लदुत्कलिकासहस्रपूरितसकललोकः सीमानं प्रमाणयति, न केनापि परिमितमस्य पारमवारमथवा गाम्भीर्य्यम्, अनवरतममुष्मिन्नगाधमूले परिभ्रमन्ति कति कति न सुरासुरसमवायसंघट्टान्तरालस्तम्भभूता दुरारोहशिरसो धरणितलस्थिरीकरणसाधवः कुलमहीभृतः, किन्तु दुश्शकमिह मग्नानामुद्धरणम्। न केवलमेनमासाद्य मोहनिद्रानिमीलिकादुःस्थितविलोचनः पुरुषोत्तम एव विषविषमं भुजङ्गभोगमधिशेते, यावदितरोऽपि जनः। सोऽयमेवंविधस्तारुण्यसरोवरः, यस्मिन् भवादृशा एव मित्रप्रियदर्शना निसर्गशुचितनवः पुण्डरीकषण्डा इव न लिप्यन्ते पङ्कैः, न क्लेदमासादयन्ति रजोराजिपतनाविलैर्मदनमदविकारकल्लोलैः, न वा रजनीमुखरागवञ्चिताः सन्तमसाकुले जगति जाग्रति। वरमितरेषां सहचराणां विहसितमपि निमीलिकयाऽवधीरयन्ति, जानन्ति संकोचविकासयोरुचितं समयम्, उदाहरणं भवन्त्यक्षीणदण्डकोषाणाम्, आवासपदं भजन्ते श्रियः, भवन्ति प्रभवः सन्धानमोक्षणेषु शिलीमुखानाम्, क्षमन्ते विद्विषति राजमण्डले क्षयकलङ्कावारोपयितुम्। तदिदमितरेषां जनयतु विकारम्, आयुष्मतस्तु भुवनातिशायिशीलशालिनः सुचरितमेव शीलयतु यौवनं नाम वयः। कुमार ! दुर्वारमिदमरिषड्वर्गस्य प्रथमम् आकरो विकाराणां कामनाम किमपि वस्तु। विरूपाक्षचक्षुराशुशुक्षणिसंघुक्षणैधसि कुसुमधन्वनि प्रक्षिप्ता विवेकवारि-

विन्दवो विलोचनवाष्पोत्पीडप्रवर्तिनं धूममुद्गिरन्ति। स एष विषमेषु-विषद्रुमो वसन्तशरव्यसमुचितेन रागपल्लवितेन हरति जननयनानामर्थ-ग्रहणसामर्थ्यम्, अवाचीपवनधुवनप्रसर्पिणा रजसा मोहयत्यासन्नान्, उपनयति पञ्चत्वमात्मवशवर्त्मनः शिलीमुखान्, अशेषदग्धत्रिपुरवनेन कुटिलभ्रुकुटिलोहशलाकावघट्टितविकटघूर्जटिललाटतटदृषदुत्थितेन दवपावकेन भसितं भवन्नपि मोहनशक्त्या द्विगुणमभिवर्द्धते। विचारय वत्स! निसर्गाद-मेध्यानि, मेदोद्रवविष्टब्धपिशितपिण्डमयानि, शिरातन्तुसन्ततिनिबद्धकीकस-घटितानि, मलवाहिविवरावलिजर्ज्जराणि, त्वगन्तरितासृगशुचीनि, पूयपिशित-पेशीपूरितोदराणि, सततमुद्गत्य निलीयमानेन कमठग्रीवाविडम्बिना नवधानिर्म्मितनिर्गमावकाशे विपुलगभीरगर्भगर्ते चकितमवस्थितेन मृत्युवृष-दंशकभीतिनिभृतनिलीनेनाखुनेव प्राणपवनेन चपलतामानीयमानानि, दूरप्रसा-रिषु करणरश्मिषु गृहीत्वा केनापि कौतुकप्रपञ्चचुञ्चुना पुरुषेण यथारुचि प्रवर्त्यमानानि, स्वयमचेतनतया दारुपुत्रिकामनुकुर्वन्ति, सर्वाणि प्राणिनां शरीराणि। तेष्वपि स्तोकसत्त्वानि विरलविवेकानि; लघुप्रकृतीनि, मन्दविज्ञा-नानि, मृणालतन्तुभङ्गुरधैर्याणि, परप्राणाजीवानि, परतन्त्रजीवनानि, कतिपयदिवसविनश्वरयौवनानि, स्तनभारमन्थरगतीनि नारीणाम्; तत्रापि कच्छशाद्वलकुलीरसुषिरनिर्विशेषम्, आरण्यकानलप्लोषमलिनकुशस्तम्ब-सम्बाधश्वाविन्निवासविवरसोदरम्, प्रखरप्रावृषेण्यप्रदरवदाविलक्षारसलिल-परिवाहिपूतिगन्धिरुधिरधाराक्लेदकलुषम्, अतिप्रयत्नेन मुद्गरावघट्टितया पुरुष-ध्वजशलाकयोद्ध्रियमाणपिण्डितपूयग्रन्थिनिमिषनिर्व्यथम्, ओषधिभिर्दुष्प्ररो-हम्, उपायैरसाध्यम्, आमरणमनुवर्तमानम्, अनुपचारहार्य्यविकारपीडम्, अध-रव्रणरन्ध्रम्; येन नित्यमेव श्रौतेषु विधिषु स्वातन्त्र्येण नाधिकुर्वते यावज्जीव-मशुचयो योषितः। तस्मिन्नेवंविधे वनितावराङ्गमन्दिरे कृतवसतेर्मदनकृमेः कुतो न जुगुप्ससे? बुध्यस्व मूलमशेषाणामनर्थानाम्, निदानमपवर्गविरोधिनो बन्धस्य, निमित्तमयशसः, हेतुरुन्मादस्य, कारणमवलेपानाम्, आधारो वन्धु-वरस्य, साधनमधर्मस्य, मित्रं कलेः, सुहृदुन्मार्गे प्रवृत्तेः, प्रथमममङ्गलम्, यदनभिजातचरिताः स्वैरिण्यो नाम।

तस्मादमुष्मादरिवर्गस्य प्रथमाद् बिभ्यदुद्वह पैत्रीं धुरम्, न कदापि विप्रलभ्यस्व विटैः, न विक्रियस्व साधुभिः, न शोच्यस्व वन्धुभिः, नाभिनन्द्यस्व वैरिभिः, न ह्रियस्व वैशिकैः, न कुलकलङ्केन योज्यस्व कुलटाभिः, न परिमुष्यस्व सम्भलीभिः, न हृदयेनोपहस्यस्व कृतकहावबञ्चितजनताभिर्वारवनिताभिः, न खेदयस्व जनमनार्यचरितेन;

न भेदय धर्मसेतुमयशस्यैरस्वर्ग्यैरितरजनचेष्टितैः, न छेदयास्माकमाशातन्तुमसमशरपरवशेन व्यवहारेण, न क्लेदयान्तःकरणमधर्मरसेन, न वेदय तनयदुर्यशःश्रवणवेदनामवदातचरित्रौ पितरौ ।

एनमनङ्गं नाम महान्तमनर्थमुत्तीर्णा अपि न लङ्घितुमीशते क्रोधसिन्धुम् । उदाहरणमिह पुराणब्रह्मणामार्य्यपुत्राग्रजानां षण्णामन्यतमस्य भगवतः सधर्म्मिण्यामस्मज्जेष्ठयातरि जैवातृकजनन्यामुत्पन्नो वत्सस्यास्य ऋतध्वजस्याग्रजो दीर्घायुषामचरमो दुर्वासाः, यस्य शापभयविद्रवणाभ्यासजनितसंस्कारवशादद्यापि न क्वचिद्विश्रब्धमादधाति पदम्, इतस्ततो भ्रमति निर्वासप्रतिनिवृत्तापि भगवती लक्ष्मीः। तात ! मर्षयामर्षं नाम प्राणिनां द्वितीयमरिम्। अनेन जितेन जितानेव जानीहि जगति सर्वरिपून् । अयमसौ गुणानामिव दोषाणामपि परिभवाय प्रगल्भमानो विश्वमुपप्लवते । तत्रेयमुपपत्तिः— ईशानललाटलोचनमाविश्य दयामिव, दममिव, क्षमामिव, नियममिव, यममिव, समतामिव, सत्त्वमिव, काममपि कोपो ददाह । भार्गवकुठारधारानिबद्धपदो गुरुगौरवमिव, आनृशंस्यमिव, मातृममतामिव, रेणुकादुश्चरितमपि निर्ज्जहार । दुर्वाससो ब्रह्मवाग्वज्रमनुगत्य मैत्रीमिव, ब्रह्मवर्च्चसमिव, तप इव, संतोषमिव, दीनानुकम्पामिव, परपीडनभयमिव, लोभमूलं लक्ष्मीमपि निरवासयत् । अनेन वशीकृतानां नास्ति परत्रेह वा लोके श्रेयः, न विद्यते विश्वसनीयता नाम पुरुषकाराणां प्रथममारम्भमूलम्, अनुरागो नाम संपदां निदानम्, (अ)पराधतितिक्षा नाम महिमोपचयकारणम्, आश्रितदुर्विनयमर्षणं नाम पूज्यताहेतुः, अनुकम्पा नाम निखिलधर्मसाधनम्, वृद्धविधेयत्वं नाम वृद्धिलक्षणम्, आयाससहत्वं नाम सिद्धिलक्ष्म, भरवहत्वं नाम स्वजनोपजीव्यताबीजम्, इत्येवमन्येऽपि न कोपनं जनमाश्रयन्ते परिजना इव गुणाः, त्यजन्ति कलत्राणीव संपदः, भीताः प्रवसन्ति तिष्ठन्तोऽपि नोपचीयन्ते तनया इव विद्याऽऽगमाः, परिहरति लोचनपथमस्य दासवर्ग इव परलोकः, न हृदि निर्भरं क्रीडति शिशुरिव पूर्वापरप्रतिसंधिः । अमुष्य दुर्ल्लभो जगति वन्धुरिव सौहृदानन्दः, विपदामभ्युपपत्तिहेतुरिव विवेकः, व्यसनेषु शरणमिव वत्सलो भावः। तमेवंविधमखिलपुरुषार्थपरिपन्थिनम्, अशेषनिःश्रेयसावसादिनम्,आनन्दद्रुमकुठारम्,अ(भ)द्र(ता)लतामूलम्, क्रोधपावकमुपशमयितुमिदमुपनिषदां सारभूतममृतमनुशीलय—"न सन्ति वैरिणो न विद्यते वैरानुवन्धनिमित्तमात्मापराधनिबन्धनो वचोबन्धः" इति ।

जात ! जागृहि, त्यज प्रमादनिद्राम्, अवधेहि सोऽयमविवेकभ्रमरपदानां प्रतिपदोपपादितमूढजनविपदाममीषां षण्णामरीणां

तृतीयो निखिलमेव विषयमाक्रामति दुर्वारो लोभः । यदि न दुरात्मानमपकारिणां प्रवरमाक्रान्तसकललोकमेनमेव प्रभवसि निग्रहीतुम्, अलममीभिरेकैकविषयस्वामिपदनिर्वृतैरल्पप्राणैरवजितै- दिगन्तसामन्तैः । न चेदस्य वलवतो वैरिणो वशे पतितमात्मान- मुन्मोचयितुमुत्सहसे, किमनया त्याजितपरपरिग्रहया भुवा । यावदिह मनसो मायावशपतितान्धकारे सर्वमितरदपहाय कनकप्रभृति मदसाधनं वस्तु वहु मन्यसे, तावदीशानपदलाञ्छितोऽपि निष्कलङ्कराजकलालङ्करणोऽपि विषमदृष्टिरकिञ्चन एवासि । न शोभन्ते निरवसानदीर्घाभिराशाभिरपि- हितकलेवरस्य दुर्वारदैन्यदुःस्थितस्य तव विभूतयः । यदा पुनः परिहृत्य प्रादेशिकीं ममताम्, अभ्युपेत्य समताम्, अखिलमेव विश्वमात्मसात् करिष्यसि तदा परमतत्त्वलाभपूर्णस्य कुत्र लोभः ? वीतवैरानुवन्धनिवन्धनस्य कः शत्रुः ? अपेतस्वपरविभागस्य किमप्रियम् ? अपास्तद्वैतस्य कुतो भयम् ? अजातशत्रोः का चिन्ता ? स्वमात्रशेषस्य किमिव दैन्यम् ? अद्विष्टदुःखस्य कीदृशी शङ्का ? सुखमश्लाघमानस्य कतमस्तृष्णाज्वरः ? विषयवैषम्यमुषिताशयस्य कीदृक्षः पक्षपातवैपक्ष्यहेतुराधिरथवा व्याधिरिति गोष्पदमिव तरिष्यसि संसारविप- दर्णवम् ।

स खलु हैमनं जलमामज्वरोपशमनाय वपुषि परिषिञ्चति, हव्य- वाहनहेतिशान्तये हविराधारयति, तप्ततैलकटाहसंज्वरमुपरमयितुमम्बु वर्षति, तूलपूलेनानलाङ्गारमन्तर्द्धातुमिच्छति, क्षीरधारावलेहनेन व्यालविष- मुपहन्तुमीहते, चुलुकोत्सेकेन सागरमशेषतः शोषयितुमाकाङ्क्षति, प्रदीपरुचा दिवसकरमभिभवितुमभिलषति, चकोरचञ्चूपुटकवलनेन कौमुदीक्षयमा- शास्ते, तमालदलवीजनेन वहुलनिशीथिनीनिशीथतमिस्रमुत्सारयितुमुत्सहते, यो मूढचित्तवृत्तिरनुन्मूलितविषयमृगतृष्णोपचयामात्मनो दीनतामपनेतु- मनर्थमूलमर्थानुच्चिनोति, परोत्कर्षमत्सरकदर्थितो दिने दिने द्विगुणयति दीप्यमानलिप्सोदयदावदवथुदूयमानमानसो दैन्यम् ।

अचरमेयमनभिजातचरितानाम्, आदिरसौ पञ्चत्वमुपेत्य परपुरं प्रविशतां भूतानाम्, अग्रणीरेषा विषादमूर्त्तीनाम्, अग्रिमेयमुग्रतनूनाम्, उत्पत्तिरियमन्धङ्करणस्य रजसः, विभागावधिरसावनवसानशून्यानामाशा- नाम्, मूलमिदं कठोरप्रकृतेः, निदानमिदमाविलतानाम्, अनेक- च्छिद्रजर्ज्जरेयम्, मातङ्गसङ्गस्थिरतादूषितेयम्, अनेक- वर्णसंकलनविरूपेयम् । एनामाश्रित्य वर्त्तते मलिनो नाम गुणः,

छायाप्यमुष्याः कलङ्कयति शुचितरं द्विजराजम्, एकस्य भुजङ्गस्य वपुषि निर्भरनिषण्णा परिहृत्य तस्य नयनपथमपरान् कति न रमयति नरानियम्, यां मम ममेति मन्वानाः कलहेन पुरुषायुषमवसादयन्ति मूढा महीभुजः, या च महावराहदशनशलाकाविद्धमर्मेव मूर्छिता राजशतभुजावष्टम्भविधृतापि स्खलति, महात्मभिरर्णवैर्ज्जलधरजलार्द्रासलिलशीकरैरभिविध्यमानापि न स्पन्दते, सगरसुतखातव्रणव्यथामुषितहृदयेव फणिफणामण्डलेऽपि पदमारोप्य न प्रभवति पदमपि चलितुम्, इयमनार्य्याणां प्रथमगणनीया वसुमती परस्परविरुद्धपुनरुक्तप्रकृतिरेकाऽपि भेदहेतुरवनिभुजामनेकविधविग्रहमूलमपि क्षपयति नरविग्रहान्, अचलापि न कस्यापि वशे चिरतरं तिष्ठति, स्थिरापि प्रथमं प्रथममपहाय परं परमभिसरति, गन्धगुणाऽपि न गुणगन्धमपेक्षते, शेषाधिकरणाप्यशेषाधिकरणतां प्रतिपद्यते, स्वयमनन्ताप्यनन्तमधः करोति, सागरवलयितापि नगरवती, नायकवत्यप्यतरला, नागैरुदूढाप्यगैः स्थिरीक्रियते, गौरपि नवनवं नरं कामयते, कषायरसा धात्र्यपि न माधुर्य्यमभिव्यञ्जयति, न रञ्जयति तत्त्वविदः, नरं जयति विषयकामुकम्, न राजते गिरिविमर्षवताम्, न राजते गिरिवरेऽपि, पूरयति मनोरथमक्षीणतृष्णाज्वरस्य जनस्य, न मेरुसानुवन्धवासिन्या जनतया स्पृश्यते, न मेरुसानुबन्धानि गिरिवनानि वहति, वराहवधूर्वहति गौरवम्, वराहवधूर्वहपुरुषैरुपभुज्यते ।

मानवराजनन्दन ! विद्युच्चपलेयमचला कस्य परिचयं प्रमाणयति । पश्य—प्रमददन्तालबलाहकावलीमुक्तदानोदकासारदृढदुर्दिनासु, 'पतितानुपतितवीरपुरुषरोघोध्वनिमुखरकूलङ्कषरजस्वलाऽसृगापगाप्रवाहासु, विस्फुरितहेतितडिदालोककिर्म्मीररणधरणिरेणुधारान्धकारासु, समरवर्षानिशासु निर्भरमालिङ्ग्य वीरशय्यामधिशयानमुत्पतत्पत्त्रिपत्त्रव्यजनवातवर्द्धितया महत्या दीर्घनिद्रया निद्रान्तमेकं पतिमपहाय द्वितीयमभिकामयते, न गणयति पूर्वस्य कलेवरपरिपूरणोच्छलितमात्मनि संक्रान्तमनुरागम्, अपरस्य च परपुरुषकण्ठग्रहानुरक्तमण्डलाग्रलताकरग्रहणैकतानताम्, एकेन प्रसह्य भुज्यमानेयमन्यमात्मनः कामुकं कुलाचलकन्दराकुशूलान्तराले तिरोदधाति, कमपि विन्ध्याटवीतृणभारेणावृणोति, कञ्चिदर्णवनीलपटजम(व)निकोल्लङ्घनेन गोपायति, कस्यचिदपचितबलस्य करमितरस्य करे न्यस्य परिहारयति वैरम् । एनां भजन्तः परेषां दण्डपातमपि मृष्यन्ते, ग्रहगृहीता न विग्रहव्यसनपाताद् बिभ्यति । तदेवममी

यावदविघटिताङ्गसन्धयोऽवतिष्ठन्ते, यावदभग्नयानशक्तयो भवन्ति, यावदासनमपि निवन्द्धुमीशते, यावदाश्रयमनुपलभ्य नावसीदन्ति, विरुद्धया च प्रकृत्या नावगृह्यन्ते, न मुञ्चन्ति तावदेनामनेकपुरुषसम्भोगदूषितां वसुमतीं नाम जरत्कुलटामगणितपरलोकभया राजविटाः।

तामिमामङ्गारकप्रसवेन दुर्ग्रहगृहीतकुलाम्, नरकजननीम्, सुरालयाधिवासमदमत्ताम्, असकृदर्णवार्णसि मग्नोन्मग्नामपि सततरजस्वलामवनिमनेकैरुपायैरपि न गोप्तुमीशते, न च प्रभवन्ति वहुपुरुषपरिग्रहव्यसनमुन्मोचयितुमशेषभुवनधुरन्धराः, न ज्ञायते वलयितलोकालोकपथमनतिक्रम्य स्थिताऽपि, परिक्षिप्तार्णवपाशवद्धाऽपि, गुरुग्रावप्रकरयन्त्रिताऽपि, दिवानिशमभितो भ्रमद्भिरालोकचटुलतारकैरविरललग्नवद्धमण्डलोदयैर्ग्रहगणैर्मध्ये कृतापि, विषधरफटास्फोटभयनिःस्पन्दाऽपि, कया गत्या कस्य दूत्येन केनाभिसारिता पूर्वमपहाय परं कामयते कुलपांशुला काश्यपी। तदिह न विश्वसिहि, नाभिनिविशस्व, विश्वमोहिनी न कस्यापि वशंवदा विश्वम्भरेति त्यज लोभम्, अगृध्नुरादत्स्व सकलमर्थम्, अलिप्तो भुङ्क्ष्व भोगम्।

अहो! महानयमनर्थानाम्, मूलमिदमशेषदोषाणाम्, वागुरेयमात्महरिणस्य, निदानमिदमान्ध्यस्य, वन्धुरसौ संसारवन्धस्य, भूमिरियं भूयसीनां वेदनानाम्, अनालोकहार्यमिदमन्धतमसम्, असुलभप्रबोधेयमखिलविवेकनिग्राहिणी निद्रा, दुर्ल्लभचेतनेयमनादिमूर्च्छा, यद्वरीणां तुरीयः, प्रथमो निःश्रेयसविरोधिनाम्, मध्यमस्तम्भो यातनामण्डपस्य, मोहो नाम। दुरात्मानमेनमाश्रित्य वर्तन्ते त्रिचैकविंशतिधा शतसहस्रधा व्यूहितविग्रहाणि निसर्गप्रतिकूलस्वभावानि दुःखानि। तेनामुना पापीयसा प्रथमेन तिरोहितो न प्रकाशते, परिच्छिन्नवृत्तिरिव, क्षयोपचयविकारवानिव, जननिधनप्रसादमालिन्यविसदृशावस्थ इव, मलिनमायापङ्कलेपकलङ्कादशुचिरिवोपलभ्यते भगवाननादिरनन्तो विभुः। अविदितस्वरूपाः खिद्यन्ते प्राणिनः। तमेनमुन्मूलयितुमवधारय नायमहमिति, सोऽहमिति, न ममेदमिति, नैषामहमिति।

शीलनिधे! निधेहि मनसि दमम्, न मदेनाभिभूयमानः परिभव साधून्, अमीषु त्रयीमिव वर्षयितुम्, त्रैलोक्यमिवोपप्लवितुम्, त्रिवर्गमिव तिरोधातुम्, त्रिधा व्यूहितविग्रहेषु मदेषु प्रथमो विद्यया, द्वितीयो लक्ष्म्या, तृतीयः शारीरकेण गुणपदान्तरितेन दोषेण प्रसूतः। विरला एव तेषामविषयो मदानाम्, विशेषतो धनगृध्नुजनविप्रलम्भमूढो राजलोकः कषाय इति न

पिबति परिणतिसुरसमपि गुरुवचनामृतपरिपाकम्, कटुरिति नावलेढि निगमनिगदम्, असमञ्जसप्रकृतिरित्युपहसति विषयाभिलाषगदभिषजम्, अबद्धं प्रलपतीति शास्तारमुपेक्षते, परिभवति परिचारकान्, अनादृत्य वर्तते क्लेशैकफल इति साधूपवासम्। एवंविधः कथमुत्तरतु दिने दिने वर्द्धमानमसाध्यमभिमानव्याधिम्।

अनया च शशधरबिम्बधवलया भगवत्या भारत्या दिशि दिशि प्रसारिताऽपि कीर्त्तिकौमुदी कतिचन शुचिजनानम्बुजवनानीव निमीलयति, कियतः प्रियतमसः कैरवषण्डानिव ह्रासयति। या मदकलङ्कमेव नः क्षालयितुं क्षमते, प्रत्युत यथा यथा वर्द्धते तथा तथोपचयमानयति। कोऽर्थस्तया सरस्वत्या, यया महाननर्थानामहङ्कार एव न प्रशमितः। या चेयमात्रेयवाग्वज्रानलदवथुदुःस्थितेव दिशि दिशि भ्रमति, नारायणहृदयकज्जलकुड्यनिष्पेषमलिनेव तमोमयी भवति, निसर्गावदातमपि स्पृशन्ती मलिनयति, मन्दरमूलशिलाप्रहारवेदनामूढेव जनेषु विशेषं न पश्यति, हालाहलसहवासलब्धशक्तिरिव महतामीश्वराणां कण्ठमुपगूहमाना विषादपदमर्ज्जयति, कौस्तुभसप्रसवा कठोरप्रकृतिषु प्रीयते, हिमधामसोदरा जडेषु सौहृदमाधत्ते, वडवानलसगर्भा निरिन्धनमूष्मणा ज्वलति, करेणोरभ्रमोः पत्या सहोत्थिता कर्णचापलमदान्ध्ययोरुपदेशाय भवति, मदिरया सममुद्भूता बहु प्रलापयति, हरिहयहयराजानुकरणग्रहिला बहुभिर्द्धाराभिरनिर्वार्य्यचापला कतिपयेन कालेन बहुविषयानाक्रामति। याममृतसहजामास्वाद्य निमिषसुखवञ्चितदृशो देवपदलाभदुःस्थिता न भुवि पदमारोपयन्ति, सुरालयपरिचयमत्ता न च्छायया स्पृश्यन्ते, बहुभिरुपायैरुपासिता अपि न प्रस्विद्यन्ते, पूजिता अपि शिलातदात्मतया प्रतिष्ठिता न चेतयन्ते, स्तुतिशतप्रसन्ना दर्शनदानमनुग्रहं मन्यन्ते, न मृत्योर्बिभ्यति, न वार्द्धकविधेया भवन्ति, सर्वदाऽनवगतमूलबन्धेन मृषाऽमर्षेण विक्लवा भवन्ति, गुरुपरिचरणेन विद्याविदोऽपि सहजवैरं न त्यजन्ति। यां च पारिजातेन साकमुत्पन्नामभिसन्धाय प्रवर्तते महेन्द्रोपेन्द्रयोरिव सहजयोर्विरोधः, तयैवंविधया दुरभिजातानां प्रथमया लक्ष्म्या किमन्यत् प्रसवितव्यम्, ऋते धनाभिमानात्।

लावण्यमिति, वाग्मितेति, यौवनमिति, बलमिति, महाकुलप्रभवतेति गुणाः, किं वा दुर्वारविकारहेतवो दोषाः प्राकृतस्य जनस्य जनयन्ति स्मयम्, ननु (न तु) महात्मनो विदिततत्त्वस्य भवादृशस्य। तिष्ठतु तावदन्यत्। वत्स! मत्सरं नाम महान्तमुपप्लवमुपशमय, येन च्छिन्नमूला इव

सरितां प्रवाहाः स्वयमेव निश्शेषशोषमुपैष्यन्ति दोषाः । पश्य, प्रथममिदम-मङ्गलम्, आद्यमिदमश्लीलम्, मुख्यमिदमयशस्यम्, प्रधानमिदमनायुष्यम्, अग्रिम-मिदमपचरितम्, अचरममिदमेकान्तगर्हितम्, अग्रणीरेष महतां पाप्मनाम्, अधिपतिरेष नरकफलानाम्, सन्ध्येयं निर्ऋतिनिशीथिनीनाम्, अमावास्येयमभि-जातिकौमुदीनाम्, यदसति सति वा कारणे परशुभविद्वेषो नाम । प्रकृत्यैवास-ती खलता यदि कदापि लोकानुप्लवितुमेव कस्यापि मूढदृशो दर्शनपथमवतरति, हन्त ! तस्याः फलमभिलषन्तो महाजनोपहासिनः परैरुपहस्यमात्मानं नाव-बुध्यन्ते । भगवतो वृषस्य पादाः सर्वथा तुदन्ति खलम्, न तु साक्षादेनं स्पृशन्ति, यमन्तरा कृत्वा दमयितुमारभन्ते, सोऽपि खलपरिचयाद्विगलितसारो जर्ज्ज-रितेनात्मना पलालशेषो भवति । मध्यस्थमेढिदृढीकृतगुणानां गवां दमित-खलमण्डलाः पादा बहुमधुरसस्यास्वादनेन जीवयन्त्येव सकललोकम् । अमुष्य तु खलस्योद्धृतसर्वफलस्य रजोमलिनिमैवावशिष्यते । स्नेहमपहाय खलीभवतः प्रकृतिकटोः क्षुद्रस्य मर्षयस्येव मत्सरस्य जनस्य विना दारुणातिपीडनमसुलभो ज्ञातेयसङ्कलनपिण्डीभावः । विदुषि लोकविपरीत-बुद्धिरिति, कवयितरि मृषाप्रलापक इति, धर्म्मनिष्ठे विप्रलम्भक इति, धनवति कदर्य इति, मितभाषिणि मूक इति, वाग्मिनि वाचाट इति, क्षमावत्यक्षम इति, कारुणिके मृदुरिति, शूरे चपल इति, वदान्ये दुर्नय इति, सुन्दरे लम्पट इति, ब्रह्म चरति क्लीब इति, प्रव्रजति विधिवञ्चित इति, राजनि मृषावादविप्रलभ्य इति, चन्द्रमसि कलङ्कीति, रवौ सर्वदानुदित इति, शतक्रतौ सहस्रभग इति, ब्रह्मणि दुहितृकामुक इति, कमलापतौ सत्याप्रिय इति, कपर्दिनि कपालीति दोषमारोपयतः खलस्य नास्त्यवचनीयो जगति जन्तुः, न भवत्यन-भिशंसनीयो जनो नाम । न खलु निपुणं निरूपयन्तोऽपि भुजगेषु परेषां प्राण-हरणस्य, पिशुनेषु महतां यशस्तिरोधानस्य, तमसि तामरसानां लक्ष्मीप्रवास-नस्य, अकालजलदेषु कुमुदानां कौमुदीमहोमहोत्सवव्यकलनस्य, झञ्झामरुति महीरुहां शिखरभङ्गस्य, प्रयोजनमन्यत्प्रकृतिपरिपालनादधिगच्छन्ति । भवतु वरमुपसंहरणमेव गवाम् । अस्तु प्रतिपदं यावदोजसो मानस्य च भङ्गः, वर्ततामितरं तेजस्विनमनुप्रविश्य वर्तनम्, अनुभूयतां मलिनया मूर्त्या क्वचि-न्निलीयावस्थानदौःस्थ्यम्, उपजीवन्तु निभृतमवस्थातुमुद्भिद्गहनं निजालोकाः, तथापि बहुलदोषानुषङ्गिणि प्रसरति खलोपकारिणि तमसि, वैकल्यमाश्रित्य दिशि दिशि भ्रमन्ति, न पुनरात्मानं दर्शयन्ति शौचनिधयः । निदर्शनमत्रभवान् दर्शसन्निहितो जगदादर्शभूतप्रियदर्शनमण्डलो हिममयूखः । स्वयमलब्धवर्णाः परस्य सुरभिगुणं हरन्तो मरुतश्च पिशुनाश्च परप्राणेषु प्रहरतां कुटिलगतीनां

द्विजिह्वानामेव मधुरा भवन्ति । प्रव्रजतामपि दुस्संचरेयमवनिः, यदि न दण्डेन प्रतिक्रियेत निष्कारणो यदा कदा पिशुनाभियोग इति।

इत्येवमखिलमपि दोषजातं परिहृत्य पुराणपुरुषार्पितसर्वाङ्गामासज्य भोगे लक्ष्मीम्, अचपलो विश्वोपकाराय केवलमनन्त इव धराधुरामुद्वहन्नासादयिष्यसि प्रतिष्ठामिति भगवत्याः सूक्तानि शृण्वतामवनिपतिकुमाराणामाविरासीदवगलिताखिलमलावलेपो विवेकः ।

ततस्तातज्ञया प्रतिष्ठमानेषु सुरथशकुनिदण्डसुशर्म्मसु प्रास्थानिकमङ्गलानि निरवर्त्तयद्देवी शैव्येति समासतः कथितानि युवयोः कथाबीजानि। यथा च शकुनिर्ज्जाबालिं लतापाशसङ्कटादुदमोचयत्, यथा च पथि मिलितेन पुष्करादुत्तीर्णेन मुनिना गालवेन जाबालिना च सह सप्तगोदावरं प्रविवेश, यथा च विदर्भातः सुरथो दण्डसुशर्म्माणौ च सहेन्द्रद्युम्नेन हाटकेश्वरनिकटं प्रापतुः, यथा च पर्यायेण चित्राङ्गदायाः, मदयन्त्याः, पर्ज्जन्यदुहितुः, कन्दरमालिकन्यकायाश्च वेदवत्याः, मन्दोदर्याः, मन्दारिकायाश्च पाणिकमलानि सुरथः शकुनिरिन्द्रद्युम्नो जाबालिर्दण्डः सुशर्म्मा चेति विधिवज्जगृहुः, यथा च घृताच्यां नलं प्रसूय विश्वकर्मा सत्यध्वजशापसंकटमुत्ततार, यथा च नलेन कृतमतिदुष्करं कर्म, बद्धो लवणनीरनिधिः, इदमखिलमेव मया नाटकरूपेण निबद्धम् । अमुना गुणनिधिना शैलूषेणाभिनेष्यमाणं कथानिर्वहणं परेद्युरायुष्मतोर्दर्शयिष्यामि । वाल्मीकिसूक्तसागरादुद्धृत्यावलेहयिष्यामि पौलस्त्यकुलान्तकस्य भगवतो रामस्य चरितामृतम् । इदानीमिदमहरुपरमति, प्रत्यासीदति नः सायमाहुतिसमय इति वचनाद्विरम्य जोषमासीने, वात्स्यायनवंशवर्द्धने, विद्यानिधिनन्दने, ब्रह्मवादिनि, गोकुलनाथे, नरपतिरास्थानमण्डपादवरोधमविशत् । अहमपि राजभवनासन्नोपवनमालतीलतासद्मगृहमेधिनो मधुकरस्यातिथिर्भूत्वा तत्रैव गणरात्रमगमयम् । अनुदिनमागत्यागत्य राजसदसि तानि तानि द्विजसूक्तानि नटाभिनयकौशलानि च पश्यन् महान्तमपि कालमतीतं नाज्ञासिषम् । इदमेतदवधि दिवसलङ्घनकारणम् । प्रसीद ! नायमपराध्यति जन इति भ्रमरतरुणेनाभिहिते, मरकतमुखाद् घनसा(र)रेणुपटल इव मधुकरवरारोहावदनादुल्ललास मानावसानपिशुनः सितस्मितप्रसर इति ।

निगमनिधयो ब्राह्मीं वाचं विवेचयितुं क्षमा-
श्चरणगुरवः सोमास्वादात् कषायमुखा द्विजाः ।

हितमितगिरो वंशे वात्स्यायनस्य महामुने-
र्बुधपरिषदः कस्याः श्लाघ्या न वाजसनेयिनः ॥१॥

निगमसरसो माने दण्डाः प्रमत्तसरस्वती-
सव(स्ख)लनपतनारम्भे हस्तावलम्बनयष्टयः ।
सुकृतसदनोपादानं ते भवन्ति भजन्ति ये
रविपतिकवेर्वंशस्तम्बप्ररोहकरीरताम् ॥२॥

रविपतिकवेराविर्भूतो विवेकवतां वरो
रुचिपतिरसौ ब्रह्माभ्यासान्महामुनितामगात् ।
हरिहरसुधीस्तत्पुत्रोऽभूत्ततश्चरमं जनुः
सुचरितमयं लेभे श्रीरामभद्रबुधाधिपः ॥३॥

सकलविधिविद् ब्रह्माद्वैतप्रबन्धविचक्षणः
सुचरितगुरुर्न्यायाचार्यो विशेषविदां वरः ।
अलभत त(त)स्तातः पीताम्बरो जनुरेष य-
न्नवनिधिकविस्तस्माद्विद्यानिधिव्यपदेशभाक् ॥४॥

रुचिपतिकुले जन्म श्लाघ्यं द्वयोरुभयोः सुताः
परविजयिनश्चत्वारो द्वौ नयागमपारगौ ।
त्रिभुवनभूमौ कीर्त्तेर्भासा विभासयितुं प्रभ
दशरथनृपः सोऽसौ विद्यानिधिर्वदतां वरः ॥५॥

प्रकृतिगहने तन्त्रे वैशेषिके विवृतिं व्यधा-
दकुरुत चतुर्वर्गव्याख्याऽमृतानि च भारते ।
भरतवचसां तत्त्वख्यात्यै निबन्धमभाषत
व्यतनुत न कास्तातो वाणीविलासकविः कथाः ॥६॥

हितमपरुषं मृद्वग्राम्यं मितं बहुगोचरं
सरलविषयं व्यक्त्या वक्रं विशुद्धमलङ्कृतम् ।
दशगुणमसंख्यातोत्कर्षं विचित्रमभूद्वचो
मम पितुरुमाभर्त्तुः पीताम्बरस्य वशंवदम् ॥७॥

न परुषपदा न ग्राम्या न च्युतक्रमसंस्कृति-
र्न रसरहिता नाश्लीला न प्रसिद्धिविरोधिनी ।
न जनितपरोद्वेगा न स्तोकमप्यनृते स्थिता
प्रकृतिगदिताप्यासीद्विद्यानिधेर्विबुधस्य वाक् ॥८॥

अशरणमभूद् ब्राह्मं वर्चो निरिन्धनमैधत

ज्वर इव भुवो देव्या दुस्संवरः कलिसंज्वरः ।
अभजत कथाशेषो धर्म्मः परैरुपहास्यता-
मतनुत यदा तातो विद्यानिधिर्द्विगुरुं दिवम् ।।९।।

अवितथवचोवन्द्ये चिन्तावशंवदवाङ्मये
विदितनिखिलाम्नाये विद्यानिधौ दिवमीयुषि ।
इयमशरणा वाचां देवी लभेत कमाश्रयं
विदितमथवा कृष्णद्वैपायनो भुवि जीवति ।।१०।।

विबुधवरिवस्यार्हाः पञ्च प्रकामविभूतयः
सुकृततरवो जाता ये रामभद्रसमुद्रतः ।
कथमपि तुलां बिभ्रत्वेषामकोमलदारुणो-
पचितवपुषो दर्पस्तब्धाः सुरालयपादपाः ।।११।।

अधिगतमुपाध्यायाद्विद्यानिधेरनुचिन्तितं
विरलविषयग्राहिण्याऽपि स्वया जडया धिया ।
बहुलमथवा स्तोकं यद्यन्मया श्रुतमर्ज्जितं
परिणतिरियं तस्य प्रीत्यै फतेपतिभूपतेः ।।१२।।

इति श्रीगोकुलनाथसूक्तौ कथायां सप्तममाख्यानकमाख्यायिका च समाप्ता ।।

---

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| असंख्यम्, | असंख्यम् | १ | २० |
| समय | समये | ७ | १४ |
| द्विटीय | द्वितीय | १६ | १ |
| गरुभि | गुरुभि | १८ | २३ |
| कूप | कूपँ | १९ | ९ |
| वग | वेंग | १९ | ११ |
| मन | मनु | २० | २३ |
| कन्दप | कन्दर्पं | २० | २४ |
| गुराः | गुरोः | २२ | १९ |
| र्भाराज्य | र्भराज्ये | २२ | २२ |
| मपक्षते | मपेक्षते | २२ | ३० |
| त्वष्ट्ट | त्वष्ट्टृ | २५ | ६ |
| आहो | आहोस्वित् | २५ | २२ |
| दोवलो | दोर्बलो | २८ | १८ |
| ऋम्पते | कम्पते | ४६ | २४ |
| भव | भंव | ६० | १६ |
| वह | वहे | ६१ | २३ |
| वद | वेद | ६१ | २४ |
| सिता | सितां | ६१ | २४ |
| विविषुः | विविशुः | ६२ | ६ |
| धार | धीर | ६५ | २२ |
| सहा | सह | ६६ | १० |
| माढर | माठर | ८६ | २ |
| वद्यो | विद्यो | १०५ | ४ |
| व्यम | व्यम् | १०८ | ३१ |
| हसा | हंसा | ११० | १७ |
| संगमिष्यसे | संगंस्यसे | ११२ | २० |
| गण्यस्व | गणयस्व | ११२ | २५ |
| श्वाघा | श्लाघा | १२० | १६ |